श्री

# दशवैकालिक-सूत्रं.

अर्हद्ज्ञान क्षीराब्धि वीचिबिंदुमांशित श्री

गच्छसंवेगारस्पन

गुर्जरभाषावृत्तिं अवचूरिसंवलितं, समयसुंदरो-
पाध्यायकृत दीपिकासनाथं, श्रीहरिभद्रसूरि
कृत बृहद्वृत्ति विराजितं.

स्वमत्यनुसार शुद्ध करीने

श्री मकसुदाबादनिवासि बाबुसाहेब
राय धनपतिसिंहजी प्रतापसिंहजी बाहादुरनी आज्ञाथी

श्री मुंबापुरीमध्यें.
शा० भीमसिंह माणकाख्य श्रावकें प्रीतिपूर्वक
"निर्णयसागर" मुद्रायंत्रना अधिपति शेठ तुकाराम जावजी
दादाजी पासे छपावीने प्रसिद्ध कीधुं.

संवत १९५३ सने १९[illegible]

मिति कार्तिक शुद्ध पूर्णिमा सोमवारे.

है
य छे;
...यैनी अंदर
...द्धति राखेली छे. ... अनु-
सज्ञानोपासे क्षमा मागवाना
...ना याचुं छुं. केम के ते

# प्रस्तावना.

श्री वीतरागप्रभुनी वाणीरूपी अमृतरस जेनी अंदरथी उभराइ जाय छे, एवा ग्रंथोने मुद्रित करी प्रसिद्ध करवा ए महापरमार्थ छे, अने तेथी विद्वान जनो प्रमुदित थाय छे. वली तेथी विवेकी माणसो तेवा ग्रंथोने अवलोकीने जिनधर्ममां पोतानुं दृढपणुं संपादन करे छे. सामान्य बुद्धिना प्राणीउ तेवा ग्रंथोनुं व्याख्यानादिक श्रवण करीने परम आह्लाद मेलवे छे, तथा बोधिबीजने पामे छे. सज्जन माणसो ते वांचीने पोताना मनने निर्मल करे छे. अने धर्ममां अत्यंत आदर करे छे. एवी रीते जेमां अति उत्कृष्ट जिनवाणी समाएली छे एवा आगमोनी वृद्धि, रक्षण तथा विनय करवो, ए अति शुभ पुण्य प्रकृति बांधवानुं साधन छे. अने तेवा आगमने प्रसिद्ध करवामाटे हालना चालता समयमां मुद्रायंत्र एक अति उत्तम साधन थइ पड्युं छे. तेवा मुद्रायंत्रथी सर्व आगमोने, तथा सर्व ग्रंथोने छपावी प्रसिद्ध करवा, ए श्रुतज्ञाननी वृद्धि, रक्षण तथा विनय हालना समयमां सर्वोत्कृष्ट गणाय छे खरुं पण तेवुं महान् कार्य समृद्धिवान् उदार जैन गृहस्थथी बनी शके छे. वली तेवो पुरुष समृद्धिवान् तेम श्री वीतराग प्रभुए प्रकाशेला जिनधर्मपर अत्यंत श्रद्धालु अने आदरसत्कारवालो होवो जोइए. अने तेवो असाधारण दृढमननो माणस श्री चतुर्विध संघमां विरलोज मली आवे छे. जेम हालना समयमां बाबुसाहेब "रायधनपतिसिंहजी प्रतापसिंहजी" छे. अने तेनी जोडीनो श्रद्धालु श्रावक आधुनिक वर्तमान कालमां बीजो कोइ पण नथी. ए महान् पुरुषे उपर कहेली रीतप्रमाणे अत्यंत प्रीतिसहित सर्व आगमो एटले जैनसूत्रो छपावी प्रसिद्ध करीने जैनकोमपर मोटो उपकार कर्यो छे. अने तेमनी सहायताथीज आ दशवैकालिक सूत्र अमोए टीका, दीपिका, तथा गुजराती भाषांतरसहित छापी प्रसिद्ध कर्युं छे. अने तेमां दृष्टिदोषथी, अथवा बुद्धिदोषथी अने अज्ञानरूपी अंधकारना पराधीनपणाथी जे कंइ अशुद्ध अथवा उत्सूत्र पदनी अथवा शब्दनी योजना थइ होय, तो तेमाटे सज्जन पुरुषोए मने क्षमा करवी. जो के मारो आ विवेक अयोग्य छे, केम के, सज्जन पुरुषोनो तो एवोज स्वभाव होय छे के, तेउनी दृष्टिए सत्कार्यनी अंदर कदापी दोष दृष्टिगोचर थतो नथी. ते छतां पूर्वे श्रेष्ट ग्रंथकारोए जे पद्धति राखेली छे, तेने अनुसरीने में पण अहींआं विवेक करी बताव्यो छे. वली सज्जनोपासे क्षमा मागवाना करतां विशेषें करीने हुं दुर्जन माणसोनी वधारे क्षमा याचुंछुं. केम के तेउनो स्वभा-

वज एवो होय ले के, कोइ पण मनुष्यना हाथथी ज्यारे शुज कृत्य थाय ले, त्यारे ते जोइ तेमनां मनमां अत्यंत खेद निवास करीने रहे ले. अने बीजानी न्युनता थवाथी तेउना मनमां अत्यंत हर्ष उत्पन्न थाय ले. वली तेवा डुर्जन माणसो बीजाउना दोषो कहाडवामां अत्यंत आतुरता वतावे ले. अने बीजानां कल्याणरूप वृक्षने लेदवामां तेउ एक कुहाडानी गरज सारे ले. अने एवी रीतना असंख्य डुर्गुणोथी तेवा डुष्ट जनो जरेला होय ले. अने तेवा डुर्जनो खरेखर घुवडसमान होय ले. अने ते हेतुथी तेवा डुर्जनो खरेखर जिनवाणीरूपी सूर्यना तेजथी अंध बनीने विपर्यासपणाने पामशे, अने मनमां द्वेषबुद्धिथी ईर्षा लावीने तेउ अत्यंत खेद पाम्या करशे, अने तेटला माटे हुं तेमनी क्षमा मागुं लुं.

ज्ञानना फेलावारूपी शुजकर्म उपार्जन करवामां प्रथम श्रेणिमां गणवालायक महान पुरुष के जेमणे फक्त लोकोना उपकारनेमाटेज पीस्तालीसे जैन आगमो मूल तथा तेउमांथी, जेउनी टीका, दीपिका अवचूरि विगेरे जे अंगो मली शके ले, ते सहित मुद्रित करीने ते उने प्रसिद्ध करवामां, पोतानुं अथाग ड्रव्य खरची उद्योग करेलो ले. तेवा सज्जन माणसनी उत्पत्तिविषे किंचित् लखाण आ जगोए लखवुं. तेने हुं उचितज मानुं लुं.

बंगाल इलाकामां बालोचर, मकुदाबाद, अथवा मुर्शीदाबाद एवां त्रण सुंदरनामथी उंलखातुं एक सुंदर शेहेर आवी रहेलुं ले. के ज्यां कृष्णगढथी आवी निवास करनारा उंशवंशरूपी नंदन वनमां कल्पवृक्षसरखा डुगड नामना गोत्रवाला धर्म न्यायविवेक तथा विनय आदिक अत्यंत श्रेष्ठ गुणोथी शोजिता थएला, तेमज सर्व सत्यवादिउमां अग्रेसर, महाबुद्धिना जंडाररूप, दीन अने गरीब साधर्मी जाइउने ...न, मन अने धनथी सहाय आपनार, अत्यंत मनोहर स्वजावे करीने युक्त; पुण्यना ...नावरूपी चंद्रना प्रकाशथी सघली दिशाउने प्रकाशित करनारा राय "बुद्धसिं...ी बाबु" नामे श्रावक श्री जैनधर्म उपरें अत्यंत श्रद्धावाला हता. तेमनी सौजा...ती कुशलादे नामनी स्त्रीनी कुक्षि थकी संवत् १८३७ माघवदी एकमने गुरुवारने दि... राय प्रतापसिंह नामे कुलदीपक सुपुत्रनो जन्म थयो. तेउ सर्व धनाढ्योमां शि...मणिसरखा, जैनधर्मपर अत्यंत प्रीति राखनारा, तेमज क्षमावान, अने धर्म तथा ...र्मनो निर्णय करवामां शिरोमणि थया. तेमनी चतुर्थ पत्नीनुं नाम सौजाग्यवती ......इ हतुं. तेमणे उंशवंशमां मुक्तामणिसरखा, न्यायमार्गथी लक्ष्मीनुं उपार्जन ...नारा, तथा धर्म अर्थ अने काम, ए त्रणे पुरुषार्थोने सफल करनारा, तथा प्राणीमात्र ...ते दयाळुपणायें करीने युक्त एवा अत्यंत तेजस्वी बे पुत्रोने जन्म आप्यो. तेउमां

मोटा पुत्रनुं नाम "राय लक्ष्मीपतिसिंहजी बहादुर" तथा जेमणे आवा आगम ग्रंथो छपावी प्रसिद्ध करवामां उद्यम कर्यो, ते कनिष्ट पुत्रनुं नाम "रायधनपतिसिंहजी बहादुर" छे. ए बन्ने उत्तम गृहस्थो उत्तम गुणोना भंडाररूप तथा प्राणिमात्रना कल्याणमां अत्यंत उत्सुक थएला छे. माटे जिनधर्मपर अत्यंत श्रद्धा राखनारा एवा ते उत्तम पुरुषे आ दशवैकालिक नामनो अति उत्कृष्ट आगम ग्रंथ छपावी प्रसिद्ध करी खरेखर पोतानुं नाम सफल कर्युं छे. अने एवां पारमार्थिक कार्यो ते भाग्यशाली पुरुषने हाथे दिन प्रतिदिन थाओ एवी अमारी वारंवार विज्ञापना छे.

आ दशवैकालिकसूत्रना कर्ता श्री शय्यंभवस्वामी छे. तेमणे आ सूत्र शामाटे रच्युं ? तेनो संबंध नीचे प्रमाणे छे. ज्यारे शय्यंभव स्वामीए दीक्षा लीधी, त्यारे तेमनी स्त्री गर्भवंती हती, त्यारे स्वजनोए तेणीने पूछ्युं के, तारा उदरमां कंइ गर्भ जेवो संभव छे, त्यारे तेणीए प्राकृत भाषामां कह्युं के, "मणयं" एटले किंचित्मात्र छे. अनुक्रमे तेणीए एक मनोहर पुत्रने जन्म आप्यो, तथा तेमनी मातुश्रीए कहेला वचन परथी तेनुं "मनक" एवुं नाम राखवामां आव्युं. पछी अनुक्रमे ते मनक ज्यारे आठ वर्षनो थयो, त्यारे एक दहाडो तेणे तेनी माताने पूछ्युं के, हे माताजी, मारापिताजी क्यां छे ? त्यारे माताए कह्युं के, हे पुत्र ! तारा पिताजीए तो चारित्र अंगीकार कर्युं छे. ते सांभली मनकने पोताना पिताजी पासे जवानी इच्छा थइ. हवे ते समये श्री शय्यंभवस्वामी चंपानगरीमां विराजता हता, अने ते खबर मनकने मलवाथी ते पण त्यां पहोंच्यो. ते वखते श्री शय्यंभवस्वामी स्थंडिल जता हता अने मार्गमां तेमणे मनकने जोयो. त्यारे तेमणे पूछ्युं के तुं कोण छे ? त्यारे तेणे पोतानो सर्व वृत्तांत तेमने कही संभलाव्यो. त्यारे शय्यंभव स्वामिए तेमने फरीने पूछ्युं के, तुं अहीं शा माटे आव्यो छे ? त्यारे मनके कह्युं के, मारे दीक्षा लेवी छे अने आप जाणता हो तो कहो के, ते अमारा पिताजी शय्यंभवस्वामी क्यां छे ? त्यारे आचार्यजीए कह्युं के, ते तारा पिता अने हुं कंइ भिन्न नथी, माटे तुं मारी पासे दीक्षा ले ? मनके ते वात कबुल करवाथी आचार्यजीए तेमने त्यांज दीक्षा आपी. तथा पछी तेमने साथे लेइ आचार्य महाराज उपाश्रये आव्या, तथा ज्ञानबलथी जाण्युं के, आ मनकनुं आयुष्य फक्त हवे छ मासनुंज बाकी छे; माटे आटली टुंक मुदतमां आ मनक कृतार्थ शी रीते थइ शके ? छेवटे तेमणे विचार्युं के, कारण पड्ये चौदपूर्वधारी मुनि पूर्वोमांथी सूत्रनो उद्धार करे छे, तो मने पण आ समये आवुं प्रयोजन पड्युं छे, तो हुं पण तेम करुं. एम विचारि श्री शय्यंभव मुनिए पूर्वोमांथी दश अध्ययननो उद्धार कर्यो; तथा ते दश अध्ययन भणवामां मनकने घरो-

वर ठ मास लाग्या. तथा ठ मास संपूर्ण थतांज मनके समाधिमां रही काल कर्यो. त्यारे श्री शय्यंभव आचार्यना नेत्रोमांथी हर्षाश्रुनी जलधारा छुटी. त्यारे यशोभद्रादिक साधुओए ते अश्रुनुं कारण पूछ्याथी आचार्य महाराजे मनकनो सर्व वृत्तांत कही संभलाव्यो. ते सांभली तेओने मनमां पश्चात्ताप थयो के, अहो ! आपणे गुरुपुत्र मनकनी सेवा करी शक्या नहीं. तथा पछी संघना आग्रहथी श्री शय्यंभवस्वामीए उधरेलां ते दशे अध्ययनो प्रगट राख्यां, अने एवी रीते विकाले ते दश अध्ययननी गुंथणी करवामां आवेली होवाथी ते सूत्रनुं नाम " दशवैकालिक " राखवामां आव्युं छे.तथा उपरनी बे चूलिकाओ तो श्रीमंधरस्वामीए संघने भेट तरिके मोकलेली छे, ते वात प्रसिद्ध छे. एवी रीते आ दशवैकालिक सूत्रनी उत्पत्ति थइ छे.

आ दशवैकालिकसूत्रमां रहेलां दश अध्ययनो तथा बन्ने चूलिकाओ अवश्य साधुओने ध्यानमां राखवा लायक छे; अने ते ध्यानमां राख्याथी तेमने तेमना अमूल्य चारित्राचारमां अतिचार दोष लागतो नथी. अहीं ते विषेनुं वधारे ध्यान नहीं करतां आ सूत्र आद्यथी ते अंतसुधि वांची जवानी तथा ते ध्यानमां राखवानीज अमो सर्वने भलामण करीए छीए.

आ सूत्रपर चौदसोने चम्मालीस ग्रंथना कर्ता महान आचार्य श्री हरिभद्र सूरिजीए शिष्यबोधिनी नामनी टीका तथा अवचुरी रचेली छे. तथा खरतर गछमां यपला युग प्रधान श्री जिनचंद्र सूरिना शिष्य श्री सकलचंद्रगणिना शिष्य श्री समयसुंदर गणिए विक्रम संवत १६९१ मां दीपिका नामनी शब्दार्थ वृत्ति पण बनावी छे. तेथी अमोए पण यथामति संशोधन करी करावीने ते हारिभद्री टीका, अवचूरि तथा समयसुंदरजीनी दीपिका टीका मूलसहित आ ग्रंथमां छापी छे. तेम मूल सूत्रनो गुजराती अर्थ करीने पण आ ग्रंथमां छाप्यो छे. आ ग्रंथ घणोज उपयोगी होवाथी छापी प्रसिद्ध कर्यो छे. छेवटे तेमां मूल सूत्रनो संपूर्ण पाठ पण दाखल करवामां आव्यो छे. प्रमादवशथी आ ग्रंथमां जे कंइ छापतां करतां दोष रह्यो होय ते " मिछामि दुक्कडं. "

श्रावक. भीमसिंह माणेक.

# अनुक्रमणिका.

# अनुक्रमणिका.

॥ ॐ नमो वीतरागाय ॥

# राय धनपतसिंघ बहादुरका जैनागमसंग्रह.

## भाग तेतालीसमा.

॥ अथ ॥

## श्रीदशवैकालिकम्

गुर्जरभाषासहितम् अवचूरिसंवलितं समयसुन्दरोपाध्यायकृतदीपिकासनाथं श्रीहरिभद्रसूरिकृतबृहद्वृत्तिविराजितं च प्रारभ्यते ।

धम्मो मंगलमुक्किठं, अहिंसा संजमो तवो ॥
देवा वि तं नमंसंति, जस्स धम्मे सया मणो ॥१॥

॥ अथ श्रीदशवैकालिक सूत्रनो वालाववोधप्रारंभ ॥

(तेमां प्रथम मङ्गलाचरण.)

॥ सर्वान्तरायशमनं, सर्वमङ्गलदायकम् ॥
॥ सर्वजीवावनकरं, सर्वज्ञं नौमि वोधये ॥ १ ॥

जेम कल्पवृक्ष उपरथी पडेला पुष्पोने एकत्र करीने देवताओ तेमनी, माला गूंथे छे, तेम कल्पवृक्ष सरखा तीर्थंकरोना मुखथकी प्रकट थयेलां, पुष्प सरखां शुद्ध, प्रमादादिदोषरहित एवां अर्थरूप वचनोने श्रवण करीने गणधरो तेमनां सूत्रो रचे छे. आ वात जैन आम्नायमां सुप्रसिद्ध छे. ते मांहेलुं दशवैकालिक सूत्र पण श्री सिज्जंभवाचार्यें भव्य जीवोना शारीरक तथा मानसिक दुःख मूकाववाने माटे तथा पोताना पुत्र मनकने प्रतिवोधवाने अर्थे रच्युं छे. एनुं उपर कहेलुं नाम पाडवानुं कारण ए छे के, दश विकालें कह्युं, माटें ए सूत्रने दशवैकालिक एवे नामें कहे छे. हवे तेमां प्रथम सिज्जंभवाचार्य अभीष्ट स्मरणरूप मंगल एक गाथायें करी कहे छे. वली ते मांगलिक जे छे, ते अन्यत्र पांच प्रकारनां कह्यां छे. तेमां प्रथम पुत्रादि जन्मरूप, ते शुद्ध मांगलिक, वीजुं गृहादिरचनारूप ते अशुद्ध मांगलिक, त्रीजुं विवाहमहोत्सवप्रमुख [illegible] मांगलिक, चोथुं धनादिक ते श्रीमांगलिक, माटे

र्मुं छकायजीवरक्षणरूप अर्थात् धर्मरूप ते सदामांगलिक छे. तो हवे पांच
ारनां मांगलिक कह्यां, तेमां धर्म जे छे, ते सदा मांगलिक छे, तेमाटें श्रीसिद्धांतवा-
पें आ दशवैकालिक नामक ग्रंथनी आदिमां धर्मप्रशंसारूप मंगल कर्युं छे. वली
क स्थलें मंगल जे छे ते त्रण प्रकारनुं पण कह्युं छे. तेमां प्रथम ग्रंथारंभें ग्रंथ-
र्विघ्नता माटें जे अभीष्ट देवतादिकने नमस्कार करवो, ते आदिमंगल, बीजुं
मध्यें जे नमस्कार करवो, ते मध्यमंगल अने ग्रंथने अवसानें शिष्यपरंपरा चाल-
ने माटें जे नमस्कार करवो, ते अवसानमंगल जाणवुं. तेम जोतां ए दशवैकालिक
नक शास्त्रनुं "धम्मो मंगलं" ए आदि मंगल, "नाणदंसण संपुन्नं," ए मध्य मंगल
ने " निक्खम्ममाणा इय बुद्ध वयणे" ए अवसान मंगल जाणवुं.

हवे धम्मो मंगलमित्यादि प्रथम सूत्रनो अर्थ लखियें छियें. ( अहिंसा के० ) प्रा-
तिपातविरति अर्थात् सर्व जीवोनी हिंसा न करवी ते, तथा (संजमो के०) संयमः
ले आश्रवनिरोध ते पांच इंद्रियनो निग्रह, चार कषायनो जय अने त्रण दंडथी विरति
त्तर प्रकारनो संयम, अने (तवो के०) तपः एटले "अणसणमूणोयरिया" इत्यादि
गाथामां कहेलुं बार प्रकारनुं तप ए रूप ( धम्मो के०) धर्मः एटले कुगतिने प्राप्त
ारा जीवोने धरीने सन्मार्गे पहोंचाडे ते धर्म ते ( मंगलमुक्किट्ठं के० ) उत्कृष्टं
लं, एटले सर्व मंगलमां उत्कृष्ट मंगल छे. ए धर्मने उत्कृष्ट मंगल कहेवानुं
रण कहे छे के, ( जस्स के० ) यस्य एटले जे पुरुषनुं ( धम्मे के० ) धर्मे एटले
ीतः वीतरागभाषित धर्मने विषे ( सया के० ) सदा एटले निरंतर ( मणो के० )
नः एटले मन छे. ( तं के० ) तं एटले ते पुरुषने ( देवा वि के० ) देवा अपि
टले भवनपति, वाणव्यंतर, ज्योतिषी अने वैमानिक ए चार निकायना देवताउ
प ( नमंसंति के० ) नमस्यंति एटले नमस्कार करे छे, तो राजादिक नमस्कार करे,
मां तो शीज नवाइ? अर्थात् धर्म जे छे, ते उत्कृष्ट मंगल छे एम सिद्ध थयुं ॥ १ ॥

---

॥ अथ श्रीदशवैकालिकावचूरिः प्रारभ्यते ॥

॥ तत्र प्रथमाध्ययनम् ॥

अंहिंसादिः षड्विधा व्याख्या। दुर्गतौ प्रपतन्तमात्मानं धारयतीति धर्मः। मङ्गयते हित-
नेनेति मङ्गलम्। संयम आश्रवनिरोधः। तापयत्यनेकभवोपात्तमष्टप्रकारं कर्मेति तपः १

---

॥ अथ श्रीसमयसुन्दरोपाध्यायकृतदीपिका प्रारभ्यते ॥

॥ तत्र प्रथमाध्ययनम् ॥

॥ श्रीजिनेश्वराय नमः ॥ स्तम्भनाधीशमानम्य, गणिः समयसुन्दरः ॥ दशवैका-

लिके सूत्रे, शब्दार्थं लिखति स्फुटम् ॥ १ ॥ धर्मो दुर्गतिप्रपतज्जन्तुधारणालक्षण उत्कृष्टं प्रधानं मङ्गलं वर्तते । को धर्म इत्याह । अहिंसा, न हिंसा अहिंसा जीवदया प्राणातिपातविरतिरित्यर्थः । पुनः संयमः पञ्चाश्रवविरमणं, पञ्चेन्द्रियनिग्रहः, चतुःकषायजयः, दण्डत्रयविरतिश्चेति सप्तदशभेदः । इत्येवं रूपः । पुनस्तपः, "अणसणमूणोअरिआ, वित्तीसंखेवणं रसच्चाओ ॥ कायकिलेसो संली-णया य बज्झो तवो होई ॥ १ ॥ पायच्छित्तं विणओ, वेआवच्चं तहेव सज्झाओ ॥ झाणं उस्सग्गो वि अ, अब्भिंतरओ तवो होई ॥ २ ॥ इति बाह्याभ्यन्तररूपं द्वादशधा । अथ धर्मकरणे माहात्म्यमाह । देवा अपि । अपिः संभावने । तं धर्मकारकं जीवं नमस्यन्ति, मनुष्यास्तु सुतराम् । तं कम् । यस्य धर्मे धर्मकरणे सदा मनः अन्तःकरणम् । इति प्रथमगाथार्थः ॥१॥

॥ अथ श्रीहरिभद्रसूरिकृतवृहद्वृत्तिः प्रारभ्यते ॥

॥ तत्र प्रथमाध्ययनम् ॥

॥ जयति विजितान्यतेजाः, सुरासुराधीशसेवितः श्रीमान् ॥
॥ विमलस्त्रासविरहित-स्त्रिलोकचिन्तामणिर्वीरः ॥ १ ॥

इहार्थतोऽर्हत्प्रणीतस्य सूत्रतो गणधरोपनिबद्धपूर्वगतोद्धृतस्य शारीरमानसादिकटुकदुःखसंतानविनाशहेतोर्दशकालिकाभिधानस्य शास्त्रस्यातिसूक्ष्ममहार्थगोचरस्य व्याख्या प्रस्तूयते । तत्र प्रस्तुतार्थप्रचिकटयिषयेष्टदेवतानमस्कारद्वारेणाशेषविघ्नविनायकापोहसमर्थां परममङ्गलाख्यामिमां प्रतिज्ञागाथामाह निर्युक्तिकारः ॥ सिद्धिगइमुवगयाणं, कम्मविसुद्धाण सव्वसिद्धाणं ॥ नमिऊणं दसकालिय-णिज्जुत्तिं कित्तयिस्सामि ॥ १ ॥ व्याख्या ॥ सिद्धिगतिमुपगतेभ्यो नत्वा दशकालिकनिर्युक्तिं कीर्तयिष्यामीति क्रिया । तत्र सिद्ध्यन्ति ।निष्ठितार्था भवन्त्यस्यामिति सिद्धिर्लोकाग्रक्षेत्रलक्षणा । तथा चोक्तम् । "इह बोंदिं चइत्ताणं, तत्थ गंतूण सिज्झइ" । गम्यत इति गतिः । कर्मसाधनम् । सिद्धिरेव गम्यमानत्वाद्गतिः सिद्धिगतिस्तामुप सामीप्येन गताः प्राप्तास्तेभ्यः सकललोकान्तक्षेत्रप्राप्तेभ्य इत्यर्थः ।प्राकृतशैल्या चतुर्थ्यर्थे षष्ठी । यथोक्तम् । छट्ठीविभत्तीए भण्णइ चउत्थी ।तत्र एकेन्द्रियाः पृथिव्यादयः सकर्मका अपि तदुपगमनमात्रमधिकृत्य यथोक्तस्वरूपा भवन्त्यत आह कर्मविशुद्धेभ्यः। क्रियत इति कर्म ज्ञानावरणीयादिलक्षणं तेन विशुद्धा वियुक्ताः कर्मविशुद्धाः कर्मकलङ्करहिता इत्यर्थः । तेभ्यः कर्मविशुद्धेभ्यः । आह । एवं तर्हि वक्तव्यं न सिद्धिगतिमुपगतेभ्योऽव्यभिचारात् । तथाहि । कर्मविशुद्धाः सिद्धिगतिमुपगता एव भवन्ति । न,

१:-"भ्रभ्रलोकान्त-" इति पाठान्तरम् ।

अनियतक्षेत्रविन्नागोपगतसिद्धप्रतिपादनपरडुर्नयनिरासार्थत्वादस्य। तयाचाहुरेके "रागादिवासनामुक्तं, चित्तमेव निरामयम्॥ सदा नियतदेशस्थं, सिद्ध इत्यनिधीयते॥" इत्यलं प्रसङ्गेन । ते च तीर्थादिसिद्धन्नेदादनेकप्रकारा नवन्ति। तयाचोक्तम्। तित्थसिद्धा। अतित्थसिद्धा। तित्थगरसिद्धा। अतित्थगरसिद्धा। सयंबुद्धसिद्धा। पत्तेयबुद्धसिद्धा।बुद्धबोहियसिद्धा। इत्थीलिंगसिद्धा। पुरिसलिंगसिद्धा। नपुंसगलिंगसिद्धा। सलिंगसिद्धा। अन्नलिंगसिद्धा। गिहिलिंगसिद्धा। एगसिद्धा। अणेगसिद्धा। इत्यत आह। सर्वसिद्धेन्यः। सर्वे च ते सिद्धाश्चेति समासस्तेन्यः। अथवा "सिद्धिगतिमुपगतेन्यः" इत्यनेन सर्वथा सर्वगतात्मसिद्धपक्षप्रतिपादनपरडुर्नयस्य व्यवच्छेदमाह। तथाचोक्तमधिकृतनयमतानुसारिन्निः। "गुणसत्त्वान्तरज्ञानान्निवृत्तप्रकृतिक्रियाः॥ मुक्ताः सर्वत्र तिष्ठन्ति, व्योमवत्तापवर्जिताः॥" व्यवच्छेदश्चैतेषां सामीप्येन सर्वात्मना सिद्धिगतिगमनान्नावात्। "कर्मविशुद्धेन्यः" इत्यनेन तु सकर्मकाणिमादिविचित्रैश्वर्यवत्सिद्धिप्रतिपादनपरस्येति । उक्तं च प्रक्रान्तनयदर्शनान्निनिविष्टैः। अणिमाद्यष्टविधं प्रा-प्यैश्वर्यं कृतिनः सदा॥ मोदन्ते सर्वन्नावज्ञा-स्तीर्णाः परमडुस्तरम्॥ इत्यादि। व्यवच्छेदश्चैतेषां कर्मसंयोगेन अनिष्ठितार्थत्वाद्वस्तुतः सिद्धत्वानुपपत्तेरिति।"सर्वसिद्धेन्यः" इत्यनेन तु नङ्ग्यैव सर्वथा अद्वैतपक्षसिद्धप्रतिपादनपरस्येति। तथाचोक्तं प्रस्तुतनयान्निप्रायमतावलम्बिन्निः॥ एक एव हि नूतात्मा, नूते नूते व्यवस्थितः॥ एकधा बहुधा चैव, दृश्यते जलचन्द्रवत्॥ व्यवच्छेदश्चास्य सर्वथा अद्वैते बहुवचनगर्नसर्वशब्दान्नावात् सिद्धिगतिगमनान्नावात्। नत्वा प्रणम्येत्यनेन तु समानकर्तृकयोः पूर्वकाले क्त्वाप्रत्ययविधानान्नित्यानित्यैकान्तवादासाधुत्वमाह।तत्र क्त्वाप्रत्ययार्थानुपपत्तेः।तत्र नित्यैकान्तवादे तावदात्मन एकान्तनित्यत्वादप्रच्युतानुत्पन्नस्थिरैकस्वन्नावत्वान्निन्नकालक्रियाद्वयकर्तृत्वानुपपत्तेः। क्षणिकैकान्तवादे चात्मन उत्पत्तिव्यतिरेकेण व्यापारान्नावान्निन्नकालक्रियाद्वयकर्तृत्वानुपपत्तिरेवेत्यलं विस्तरेण। गमनिकामात्रमेवैतदिति। नवति च चतुर्थ्यप्येवं नमनक्रियायोगेऽधिकृतगाथासूत्रान्यथानुपपत्तेः। आप्तश्च निर्युक्तिकारः। पित्रे सवित्रे च सदा नमामीत्येवमादिविचित्रप्रयोगदर्शनाच्च। कर्मणि वा षष्ठी। सर्वसिद्धेन्यो नत्वा किमित्याह। दशकालिकनिर्युक्तिं कीर्तयिष्यामि।तत्र कालेन निर्वृत्तं कालिकं प्रमाणकालेनेति नावः। दशाध्ययनन्नेदात्मकत्वाद्दशप्रकारं कालिकं प्रकारशब्दलोपाद्दशकालिकं। विशब्दार्थं तूत्तरत्र व्याख्यास्यामः। तत्र निर्युक्तिरिति । निर्युक्तानामेव सूत्रार्थानां युक्तिः परिपाट्या योजनं निर्युक्तयुक्तिरिति वाच्यम्। युक्तशब्दलोपान्निर्युक्तिस्तां विप्रकीर्णार्थयोजनां व्याख्यास्यामि कीर्तयिष्यामीति गाथार्थः । शास्त्राणि चादिमध्यावसानमङ्गल-

भाङ्कि भवन्तीत्यत आह ॥ आईमप्रवसाणे, काउं मंगलपडिग्गहं विहिणा॥ नामाइ-मंगलं पि य, चउविहं पन्नवेऊणं ॥ २ ॥ व्याख्या ॥ शास्त्रस्यादौ प्रारम्भे मध्ये मध्य-विभागे अवसाने पर्यन्ते । किं कृत्वा । मङ्गलपरिग्रहम् । कथम् । विधिना प्रवचनोक्ते-न प्रकारेण। आह । किमर्थं मङ्गलत्रयपरिकल्पनम्। इत्युच्यते। इहादिमङ्गलपरिग्रहः सकलविघ्नापोहेनाभिलषितशास्त्रार्थपारगमनार्थम् । तत्स्थिरीकरणार्थं च मध्यमङ्ग-लपरिग्रहः । तस्यैव शिष्यप्रशिष्यसंतानाव्यवच्छेदायावसानमङ्गलपरिग्रह इति । अत्र चाक्षेपपरिहारावावश्यकविशेषविवरणादवसेयौ । इति । सामान्यतस्तु सकल-मपीदं शास्त्रं मङ्गलं निर्जरार्थत्वात्तपोवत् । नचासिद्धो हेतुः । यतो वचनविज्ञानरूपं शास्त्रं ज्ञानस्य च निर्जरार्थता प्रतिपादितैव । यत उक्तं च “ जं णेरइउ कम्मं, खवेइ बहुयाहिं वासकोडीहिं ॥ तं नाणी तिहिं गुत्तो, खवेइ ऊसासमत्तेणं ” इत्यादि । इह चादिमङ्गलं द्रुमपुष्पिकाध्ययनादि धर्मप्रशंसाप्रतिपादकत्वात्तत्स्वरूपत्वादिति । म-ध्यमङ्गलं तु धर्मार्थकामाध्ययनादि प्रपञ्चाचारकथाद्यभिधायकत्वात् । चरममङ्गलं तु भिक्ष्वध्ययनादि भिक्षुगुणाद्यवलम्बनत्वादित्येवमध्ययनविभागतो मङ्गलत्रयविभागो निदर्शितः । अधुना सूत्रविभागेन निदर्श्यते । तत्र चादिमङ्गलम् “धम्मोमंगलम्” इ-त्यादि सूत्रम् । धर्मोपलक्षितत्वात्तस्य च मङ्गलत्वादिति । मध्यममङ्गलं पुनः णाणदंस-णेत्यादि सूत्रम्। ज्ञानोपलक्षितत्वात्तस्य च मङ्गलत्वादिति । अवसानमङ्गलं तु “ णि-क्खमणाए ” इत्यादि भिक्षुगुणस्थिरीकरणार्थं विविक्तचर्याभिधायकत्वात् भिक्षुगुणानां च मङ्गलत्वादिति । आह । मङ्गलमिति कः शब्दार्थः । उच्यते । अगिरगिलगिवगि-मगीति दण्डकधातुरस्येदितोनुम् धातोरिति नुमि विहिते उणादिकालच्प्रत्ययान्त-स्य अनुबन्धलोपे कृते प्रथमैकवचनान्तस्य मङ्गलमिति रूपं भवति । मङ्ग्यते हितम-नेनेति मङ्गलम् । मङ्ग्यतेऽधिगम्यते साध्यत इति यावत् । अथवा मङ्ग इति धर्मा-भिधानम्।ला आदाने अस्य धातोर्मङ्गे उपपदे “आतोऽनुपसर्गे कः ” इति कप्रत्यया-न्तस्यानुबन्धलोपे कृते “आतो लोप इटि च क्ङिति ” इत्यनेन सूत्रेणाकारलोपे च कृते प्रथमैकवचनान्तस्यैव मङ्गलमिति भवति । मङ्गं लातीति मङ्गलं । धर्मोपादानहेतुरित्य-र्थः । अथवा मां गालयति भवादिति मङ्गलं संसारादपनयतीत्यर्थः । तच्च नामादिच-तुर्विधम् । तद्यथा–नाममङ्गलं स्थापनामङ्गलं द्रव्यमङ्गलं भावमङ्गलं चेति । एतेषां च स्वरूपमावश्यकविशेषविवरणादवसेयमिति। अमुमेव गाथार्थमुपसंहरन्नाह निर्युक्तिका-रः ॥ नामाइमंगलं पि य, चउविहं पन्नवेऊणं ॥ २ ॥ नामादिमङ्गलं चतुर्विधमपि प्र-ज्ञाप्य प्ररूप्येति गाथार्थः । तत्र समानकर्तृकयोः पूर्वकाले क्त्वाप्रत्ययविधानात्। प्रज्ञा-प्यं किमत आह ॥ सुयणाणे अणुओगे-णाहिगयं सो चउविहो होई ॥ चरणकरणा-

क्षोन्यो न जवति । जितनिद्रोऽप्रमत्तत्वाद्व्याख्यानरतिर्जवति, प्रकामनिकामशायिनश्च शिष्यांश्चोदयति । मध्यस्थः संवादको जवति । देशकालजावज्ञो देशादिगुणानवबुध्याप्रतिबद्धो विहरति देशनां च करोति । आसन्नलब्धप्रतिजो जात्युत्तरादिना निगृहीतः प्रत्युत्तरदानसमर्थो जवति । नानाविधदेशजाषाविधिज्ञो नानादेशजविनेयप्रत्यायनसमर्थो जवति । ज्ञानादिपञ्चविधाचारयुक्तः श्रद्धेयवचनो जवति । सूत्रार्थोजयज्ञः सम्यगुत्सर्गापवादप्ररूपको जवति । उदाहरणहेतुकारणनयनिपुणस्तज्जन्यान् जावान् सम्यक् प्ररूपयति नागममात्रमेव । ग्राहणाकुशलः शिष्याननेकधा ग्राहयति । स्वसमयपरसमयवित्सुखं परमताक्षेपमुखेन स्वसमयं प्ररूपयति । गम्नीरो महत्यप्यकार्ये न रुष्यति । दीप्तिमान् परप्रवादिक्षोजमुत्पादयति । शिवो मारिरोगाद्युपद्रवविघातकृद्भवति । सौम्यः प्रशान्तदृष्टितया सकलजनप्रीत्युत्पादको जवति । इत्थंजूत एव गुणशतकलितो योग्यः प्रवचनमागमस्तस्य सारस्तं कथयितुमिति । यतोऽसावनेकजव्यसत्त्वप्रबोधहेतुर्जवति । उक्तं च ॥ " गुणसुठिअस्स वयणं, घयमहुसित्तो व्व पावउ जाइ । गुणहीणस्स न सोहइ, णेहविहीणो जह पईवो ॥ " तथा चान्येनाप्युक्तम् । " क्षीरं जाजनसंस्थं, न तथा वत्सस्य पुष्टिमावहति ॥ आवल्गमानशिरसो, यथा हि मातृस्तनात्पिबतः ॥ तद्वत्सुजाषितमयं, क्षीरं दुःशीलजाजनगतं तु ॥ न तथा पुष्टिं जनयति, यथा हि गुणवन्मुखात्पतितम् ॥ शीतेऽपि यत्र लब्धो, न सेव्यतेऽग्निर्यथा स्मशानस्थः ॥ शीलविपन्नस्य वचः, पथ्यमपि न गृह्यते तद्वत् ॥ चारित्रेण विहीनः, श्रुतवानपि नोपजीव्यते सद्भिः ॥ शीतलजलपरिपूर्णः, कुलजैश्चएमालकूप इव ॥" कस्सत्ति । कस्यानुयोग इति वक्तव्यम् । तत्र सकलश्रुतज्ञानस्याप्यनुयोगो जवति । अमुं पुनः प्रारम्नमाश्रित्य दशकालिकस्येति । अत्राह । ननु " दसकालियनिज्जुत्तिं कित्तयिस्सामित्ति " अस्मादेव वचनतः प्रकृतद्वारार्थस्यावगतत्वात्तदुपन्यासोऽनर्थक इति । न, अधिकृतनिक्षेपादिद्वारकलापस्याशेषश्रुतस्कन्धविषयत्वात्तद्बलेनैव च निर्युक्तिकारेणापि तथोपन्यस्तत्वादस्मादेव स्थानादन्यत्राप्यादौ शास्त्राजिधानपूर्वक उपन्यासः क्रियत इति जावना । व्याख्यातं लेशतो निर्युक्तिगाथादलं पश्चार्द्धं त्वध्ययनाधिकारे यथावसरं व्याख्यास्यामः । यतस्तत्रैवोपक्रमाद्यनुयोगद्वारानुपूर्व्यादि तद्भेदसूत्रादिलक्षणं तदर्हत्पर्पदादयश्च वक्तुं शक्यन्ते, नान्यत्र निर्विषयत्वादित्यलं प्रसङ्गेन । सांप्रतं प्रकृतयोजनामेवोपदर्शयन्नाह निर्युक्तिकारः ॥ एयाइं परूवेउं, कप्पे वन्नियगुणेण गुरुणा उ ॥ अणुउगो दसवेया–लियस्स विहिणा कहेयव्वो ॥६॥ व्याख्या ॥ एतानि निक्षेपादिद्वाराणि प्ररूप्य व्याख्याय कल्पे वर्णितगुणेन गु-

१:–' यत्तकव्य ' इति पाठान्तरम् ।

रुणा षट्त्रिंशद्गुणसमन्वितेनेत्यर्थः । अनुयोगो दशवैकालिकस्य विधिना प्रवचनोक्तेन कथयितव्य आख्यातव्य इति गाथार्थः । संप्रत्यजानानः शिष्यः पृच्छति । यदि दशकालिकस्यानुयोगस्ततस्तद्दशकालिकं जदन्त किमङ्गमङ्गानि, श्रुतस्कन्धः श्रुतस्कन्धा, अध्ययनमध्ययनानि, उद्देशक उद्देशका इत्यष्टौ प्रश्नाः । एतेषां मध्ये त्रयो विकल्पाः खलु प्रयुज्यन्ते । तद्यथा दशकालिकं श्रुतस्कन्धः अध्ययनानि उद्देशकाश्चेति । यतश्चैवमतो दशादीनां निक्षेपः कर्तव्यः । तद्यथा दशानां कालस्य श्रुतस्कन्धस्याध्ययनस्य उद्देशकस्य चेति । तथाचाह निर्युक्तिकारः ॥ दसकालियं ति नामं संखाए कालउ य निद्देसो ॥ दसकालियसुअखंधं अज्झयणुद्देस निक्खिविउं ॥७॥ व्याख्या ॥ दशकालिकं प्राग्निरूपितशब्दार्थमिति एवंजूतं यन्नाम अजिधानम् । इदं किम् । संख्यानं संख्या तया तथा कालतश्च कालेन चायं निर्देशः । निर्देशनं निर्देशो विशेषाजिधानमित्यर्थः । अस्य च निबन्धनं विशेषेण वक्ष्यामः "मणगं पडुच्च" इत्यादिना ग्रन्थेन । यतश्चैवमतः दसकालियंति कालेन निर्वृत्तं कालिकं दशशब्दस्य कालशब्दस्य च निक्षेपः । निर्वृत्तार्थस्तु निक्षेपः । तथा श्रुतस्कन्धं तथाध्ययनमुद्देशं तदेकदेशजूतम् । किम् । निक्षेप्तुमनुयोगोऽस्य कर्तव्य इति गाथार्थः । तत्र यथोद्देशं निर्देश इति न्यायादधिकृतशास्त्राजिधानोपयोगित्वाच्च दशशब्दस्यैवादौ निक्षेपः प्रदर्श्यते । तत्र दशैकाद्यायत्ता वर्तन्ते । एकाद्यजावे दशानामप्यजावादत एकस्यैव तावन्निक्षेपप्रतिपिपादयिषयाह ॥ णामं ठवणा दविए, माउयपयसंगहेक्कए चेव ॥ पज्जवजावे य तहा, सत्तेए एक्कगा होंति ॥ ८॥ व्याख्या ॥ इहैक एव एककः । तत्र नामैकक एक इति नाम । स्थापनैकक एक इति स्थापना । द्रव्यैककं त्रिधा सचित्तादि । तत्र सचित्तमेकं पुरुषद्रव्यम् । अचित्तमेकं रूपकद्रव्यम् । मिश्रं तदेव कटकादिजूषितं पुरुषद्रव्यमिति । मातृकापदैककं मातृकापदम् । तद्यथा उप्पन्नेइ वेत्यादि । इह प्रवचने दृष्टिवादे समस्तनयवादवीजजूतानि मातृकापदानि जवन्ति । तद्यथा "उप्पन्नेइ वा विगमेइ वा धुवेइ वा" अमूनि च मातृकापदानि "अ आ इ ई" इत्येवमादीनि सकलशब्दव्यवहारव्यापकत्वान्मातृकापदानि । इह चाजिधेयवल्लिङ्गवचनानि जवन्तीति कृत्वेत्थमुपन्यासः । संग्रहैककः शालिरिति । अयमत्र जावार्थः । संग्रहः समुदायः तमप्याश्रित्यैकवचनगर्जशब्दप्रवृत्तेस्तथा चैकोपि शालिः शालिरित्युच्यते बहवः शालयः शालिरिति लोके तथा दर्शनात् । अयं चादिष्टानादिष्टजेदेन सामान्यविशेषजेदेन द्विधा । तत्रानादिष्टो यथा शालिः । आदिष्टो यथा कलमशालिरिति । एवमादिष्टानादिष्टजेदावुत्तरपदेष्वपि यथारूपमायोज्यौ । पर्यायैकक एकः पर्यायः । पर्यायो विशेषो धर्म इत्यनर्थान्तरम् । स चानादिष्टो वर्णादिः । आदिष्टः कृष्णादिरिति । अन्ये तु समस्तश्रुतस्कन्धवस्त्वपेक्षयेत्थं व्याचक्षते । अनादिष्टः श्रुतस्कन्धः । आदिष्टो दशकालिका-

स्य इति। अन्यस्त्वनादिष्टो दशकालिकाख्यः। आदिष्टस्तु तदध्ययनविशेषो द्रुमपुष्पिकादिरिति व्याचष्टे। नचैतदतिचारु तस्य दशकालिकाभिधात एवादेशसिद्धेः। भावैकक एको भावः। स चानादिष्टो भाव इति। आदिष्टस्त्वौदयिकादिरिति। सर्वेऽप्येतेऽनन्तरोक्ता एकका भवन्ति। इह च किल यस्माद्दशपर्याया अध्ययनविशेषाः संग्रहैककेन संगृहीतास्तस्मात्तेनाधिकारः। अन्ये तु व्याचक्षते। यतः किल श्रुतज्ञानं क्षायोपशमिके भावे वर्तते, तस्माद्भावैकककेनाधिकार इति गाथार्थः। इदानीं द्व्यादीन् विहाय दशशब्दस्यैव निक्षेपं प्रतिपादयन्नाह ॥ णामं ठवणा दविए, खित्ते काले तहेव भावे अ ॥ एसो खलु निक्खेवो, दसगस्स उ छव्विहो होइ ॥ ए॥ व्याख्या ॥ आह। किमिति द्व्यादीन् विहाय दशशब्द उपन्यस्तः। उच्यते। एतत्प्रतिपादनादेव द्व्यादीनां गम्यमानत्वात्। तत्र नामस्थापने सुगमे। द्रव्यदशकं दश द्रव्याणि सचित्ताचित्तमिश्राणि मनुष्यरूपककटकादिविजृम्भितानीति। क्षेत्रदशकं दश क्षेत्रप्रदेशाः। कालदशकं दश काला वर्तनादिरूपत्वात्कालस्य दशावस्थाविशेषा इत्यर्थः। वक्ष्यति च बाला किड्डा मंदेत्यादिना। भावदशकं दश भावाः। ते च सांनिपातिकभावे स्वरूपतो भावनीयाः। अथ वैत एव विवक्षया दशाध्ययनविशेषा इति। एष एवंभूतः खलु निक्षेपो न्यासो दशशब्दस्य बहुवचनत्वाद्दशानां षड्विधो भवति। तत्र खलुशब्दोऽवधारणार्थः। एष एव प्रक्रान्तोपयोगीति। तुशब्दो विशेषणार्थः। किं विशिनष्टि। नायं दशशब्दमात्रस्य किंतु तदाख्यस्यार्थस्यापीति गाथार्थः। सांप्रतं प्रस्तुतोपयोगित्वात्कालस्य कालदशकद्वारं विशेषार्थप्रतिपिपादयिषयेदमाह ॥ "बाला किड्डा मंदा, बला य पन्ना य हायणि पवंचा ॥ पब्भारमम्मुही सा-यणी य दसमा उ कालदसा॥१०॥ व्याख्या ॥ बाला क्रीडा च मन्दा च बला च प्रज्ञा च हायिनी ईषत्प्रपञ्चा प्राग्भारा मृन्मुखी शायिनी। तथाहि एता दश दशा जन्त्ववस्थाविशेषलक्षणा भवन्ति। आसां च स्वरूपमिदमुक्तं पूर्वमुनिभिः ॥ "जायमित्तस्स जंतुस्स जा सा पढमिया दसा ॥ ण तत्थ सुहदुक्खाइं, बहु जाणंति बालया ॥ १ ॥ बिइयं च दसं पत्तो, णाणाकिड्डाहिं किड्डई ॥ न तत्थ कामभोगेहिं, तिव्वा उप्पज्जई मई ॥ २ ॥ तइयं च दसं पत्तो, पंचकामगुणे नरो ॥ समत्थो भुंजिउं भोए, जइ से अत्थि घरे धुवा ॥ ३ ॥ चउत्थी उ बला नाम, जं नरो दसमस्सिउ ॥ समत्थो बलं दरिसिउं, जइ होइ निरुवद्दवो ॥४॥ पंचमीं तु दसं पत्तो, आणुपुव्वीइ जो नरो ॥ इच्छियत्थं विचिंतेइ, कुडुंबं वाभिकंखई ॥ ५ ॥ छठी उ हायणी नाम, जं नरो दसमस्सिउ ॥ विरज्जइ य कामेसु, इंदिएसु य हायई ॥ ६ ॥ सत्तमिं च दसं पत्तो, आणुपुव्वीइ जो नरो ॥ निट्ठुहइ य चिक्कणं खेलं खासई य

१ 'गं' इति पाठान्तरम्। २ 'बहु' इति पाठान्तरम्।

अभिक्खणं ॥ ७ ॥ संकुचियवलीचम्मो संपत्तो अट्ठमीं दसं ॥ णारीणमणभिप्पेओ जराए परिणामिओ ॥ ८ ॥ णवमी मम्मुही नाम, जं नरो दसमस्सिओ ॥ जराघरे वि- णस्संतो जीवो वसइ अकामओ ॥ ९ ॥ हीणभिन्नसरो दीणो, विवरीओ विचित्तओ ॥ दुब्बलो दुक्खिओ सुवइ, संपत्तो दसमीं दसं ॥ १० ॥ "इत्यलं विस्तरेणेति गाथार्थः । इदानीं कालनिक्षेपप्रतिपादनायाह ॥ दव्वे अद्ध अहाउअ, उवक्कमे देसकालकाले य ॥ तह य पमाणे वन्ने, भावे पगयं तु भावेणं ॥११॥ व्याख्या ॥ तत्र द्रव्य इति वर्तमाना- दिलक्षणो द्रव्यकालो वाच्यः । अद्धेति चन्द्रसूर्यादिक्रियाविशिष्टोऽर्धतृतीयद्वीप- समुद्रान्तर्वर्त्यद्धाकालः समयादिलक्षणो वाच्यः । तथायुष्ककालो देवाद्यायुष्कल- क्षणो वाच्यः । तथा उपक्रमकालोऽभिप्रेतार्थसामीप्यानयनलक्षणः । सामाचार्यायु- ष्कभेदभिन्नो वाच्यः । तथा देशकालो वाच्यः । देशः प्रस्तावोऽवसरो विभागः पर्याय इत्यनर्थान्तरम् । ततश्चाभीष्टवस्त्ववाप्त्यवसरः काल इत्यर्थः । तथा काल- कालो वाच्यः । तत्रैकः कालशब्दः प्राग्निरूपितशब्दार्थ एव, द्वितीयस्तु सामायिकः कालो मरणमुच्यते । मरणक्रियायाः कलनं काल इत्यर्थः । चः समुच्चये । तथाच । प्रमाणकालोऽद्धाकालविशेषो दिवसादिलक्षणो वाच्यः । तथा वर्णकालो वाच्यः । वर्ण- श्चासौ कालश्चेति । भावेति । औदयिकादिभावकालः सादिसपर्यवसानादिभेदभिन्नो वाच्यः । इति । प्रकृतं तु भावेनेति । भावकालेन इह पुनर्दिवसप्रमाणकालेनाधि- कारस्तत्रापि तृतीयपौरुष्या तत्रापि वह्वतिक्रान्तयेति । आह । यदुक्तं 'पगयं तु भावेणं ति' तत्कथं न विरुध्यते इत्युच्यते । क्षायोपशमिकभावकाले शय्यंभवेन निर्व्यूढं प्रमाणकाले चोक्तलक्षण इत्यविरोधः । अथवा प्रमाणकालोऽपि भावकाल एव । तस्याद्धाकालस्वरूपत्वात्तस्य च भावत्वादिति गाथासमुदायार्थः । अवयवा- र्थस्तु सामायिकविशेषविवरणादवसेयः । तथाचाह निर्युक्तिकारः ॥ सामाइयअणुक- मओ, वन्नेउं विगयपोरिसीए उ ॥ निव्वूढं किर सेज्जं-भवेण दसकालियं तेणं ॥१२॥ व्या- ख्या ॥ सामायिकमावश्यकप्रथमाध्ययनं तस्यानुक्रमः परिपाटीविशेषः । सामायिके वानु- क्रमः सामायिकानुक्रमः । ततः सामायिकानुक्रमतः । सामायिकानुक्रमेण वर्णयितु- मनन्तरोपन्यस्तगाथाद्वाराणीति प्रक्रमाद्गम्यते । विगतपौरुष्यामेव तुशब्दस्यावधार- णार्थत्वात् । निर्व्यूढं पूर्वगतादुद्धृत्य विरचितम् । किलशब्दः परोक्षातागमवादसंसू- चकः । शय्यंभवेन चतुर्दशपूर्वविदा दशकालिकं प्राग्निरूपिताक्षरार्थं तेन कारणे- नोच्यत इति गाथार्थः । श्रुतस्कन्धयोश्च निक्षेपश्चतुर्विधो द्रष्टव्यो यथानुयोगद्वारेषु । स्थानाशून्यार्थं किंचिदुच्यते । इह नोआगमतः ज्ञशरीरभव्यशरीरव्यतिरिक्तं द्रव्यश्रुतं पुस्तकपत्रन्यस्तम् । अथवा सूत्रमण्डजादि । भावश्रुतं त्वागमतो ज्ञाता

उपयुक्तः। नोआगमतस्त्विदमेव दशकालिकं नोशब्दस्य देशवचनत्वात्। एवं नोआगमतो ज्ञशरीरजव्यशरीरव्यतिरिक्तो ड्रव्यश्रुतस्कन्धः सचेतनादिः। तत्र सचित्तो द्विपदादिः। अचित्तो द्विप्रदेशिकादिः। मिश्रः सेनादिर्देशादिरिति। तथा जावस्कन्धस्त्वागमतस्तदर्थोपयोगपरिणाम एव। नोआगमतस्तु दशकालिकश्रुतस्कन्ध एवेति नोशब्दस्य देशवचनत्वादिति। इदानीमध्ययनोद्देशकन्यासप्रस्तावः। तं चानुयोगद्वारप्रक्रमायातं प्रत्यध्ययनं यथासंजवमोघनिष्पन्नं निक्षेपे लाघवार्थं वक्ष्याम इति। ततश्च यडुक्तं " दसकालिय सुअखंधं, अप्रयणुद्देस णिक्खिविउं ॥" अनुयोगोऽस्य कर्तव्य इति तदंशतः संपादितमिति। सांप्रतं प्रस्तुतशास्त्रसमुत्थानवक्तव्यताजिधित्सयाह ॥ जेण व जं च पडुच्चा, जत्तो जावंति जह य ते ठविया ॥ सो तं च तउ ताणि य, तहा य कमसो कहेयव्वं ॥ १३ ॥ व्याख्या ॥ येन वाचार्येण यद्वा वस्तु प्रतीत्याङ्गीकृत्य यतश्चात्मप्रवादादिपूर्वतो यावन्ति वाध्ययनानि यथा च येन प्रकारेण तान्यध्ययनानि स्थापितानि न्यस्तानि स चाचार्यः तच्च वस्तु ततस्तस्मात्पूर्वात् तानि चाध्ययनानि तथा च तेनैव प्रकारेण क्रमशः क्रमेणानुपूर्व्या कथयितव्यं प्रतिपादयितव्यमिति गाथासमासार्थः। अवयवार्थं तु प्रतिद्वारं निर्युक्तिकार एव यथावसरं वक्ष्यति। तत्राधिकृतशास्त्रकर्तुः स्तवद्वारेणाद्यद्वारावयवार्थप्रतिपादनायाह ॥ सेयंजवं गणहरं, जिणपडिमादंसणेण पडिबुद्धं ॥ मणगपिअरं दसका-लियस्स निज्जूहगं वंदे ॥ १४ ॥ दारं ॥१॥ सेयंजवमिति नाम। गणधरमिति अनुत्तरज्ञानदर्शनादिधर्मगणं धारयतीति गणधरस्तं, जिनप्रतिमादर्शनेन प्रतिबुद्धं तत्र रागद्वेषकषायेन्द्रियपरीषहोपसर्गादिजेतृत्वाज्जिनस्तस्य प्रतिमा सद्भावस्थापनारूपा तस्या दर्शनमिति समासः। तेन हेतुजूतेन प्रतिबुद्धं मिथ्यात्वाज्ञाननिद्रापगमेन सम्यक्त्वविकाशं प्राप्तं, मनकपितरमिति मनकाख्यापत्यजनकं, दशकालिकस्य प्राग्निरूपिताक्षरार्थस्य निर्व्यूहकं पूर्वगतोद्धृतार्थविरचनाकर्तारं वन्दे स्तौमि इति गाथाक्षरार्थः। जावार्थः कथानकादवसेयस्तच्चेदम्। " एत्र वद्धमाणसामिस्स चरमतिज्ञगरस्स सीसो तिज्ञसामी सुहम्मो नाम गणधरो आसी। तस्स वि जंबूणामो तस्स वि य पजवोत्ति। तस्सन्नया कयाइ पुवरत्तावरत्तम्मि चिंता समुप्पन्ना को मे गणहरो होज्जत्ति। अप्पणो गणे य संघे य सवउ उवउंगो कउ। ण दीसई कोइ अव्वोच्छित्तिकरो। ताहे गारत्थेसु उवउत्तो। उवउंगे कए रायगिहे सेयंजवं माहणं जन्नं जयमाणं पासइ। ताहे रायगिहं णगरं आगंतूणं संघाडयं वावेरेइ[१] जन्नवाडं गंतुं जिरकट्ठा धम्मलाहेह। तत्र तुज्ने अतिज्ञाविज्जिहिह ताहे तुज्ने जणिवह। " अहो कष्टं तत्त्वं न ज्ञायते " इति। तउ गया साहू। अतित्राविया अ तेहिं

१ ' पहवेइ ' इति पाठान्तरम्।

भणिअं 'अहो कष्टं तत्त्वं न ज्ञायते'। तेण य सेज्जंभवेण दारमूले ठिएण तं वयणं सुअं। ताहे सो विचिंतेइ। एए उवसंता तवस्सिणो असत्तं ण वयंतित्ति काउं अज्झावगस्सगासं गंतुं भणइ। किं तत्तं। सो भणइ वेदा तत्तं। ताहे सो असिं कड्ढिऊण भणइ सीसं ते छिंदामि, जइ मे तुमं तत्तं न कहेसि। तओ अज्झावओ भणइ। पुत्ता मम समए भणियमेयं वेदढे परं सीसछेए कहियव्वत्ति संपयं कहयामि। जं एत्थ तत्तं एतस्स जूवस्स हेट्ठा सव्वरयणमयी पडिमा अरहओ साधुव्वत्ति आरिहओ धम्मो तत्तं। ताहे सो तस्स पाएसु पडिओ। सो य जन्नवाडओवक्खरोवि तस्स चेव दिण्णो। ताहे सो गंतूणं ते साहू गवेसमाणे गओ आयरियसगासं। आयरियं वंदित्ता साहुणो भणइ मम धम्मं कहेह। ताहे आयरिया उवउत्ता जहा इमो सोत्ति। ताहे आयरिएहिं साहुधम्मो कहिओ। संबुद्धो पव्वइओ सो चउद्दसपुव्वी जाओ। जया य सो पव्वइओ तया य तस्स गुव्विणी महिला होत्था। तम्मि य पव्वइए लोगो णियल्लओ तं तमस्सति। जहा तरुणाए भत्ता पव्वइओ अपुत्ताए। अवि अत्थि तव किं वि पोट्टेत्ति पुच्छइ। सा भणइ उवलक्खिमि मणगं। तओ समएण दारगो जाओ। ताहे णिव्वत्तवारसाहस्स नियल्लगेहिं, जम्हा पुच्छिज्जंतीए मायाए से भणिओ मणगंति, तम्हा मणओ से णामं कयं ति। जया सो अट्ठवरिसो जाओ ताहे सो मातरं पुच्छइ को मम पिआ। सा भणइ तव पिआ पव्वइओ। ताहे सो दारओ णासिऊणं पिउसगासं पट्ठिओ। आयरिया य तं कालं चंपाए विहरंति। सो वि अ दारओ चंपामेवागओ। आयरिएण य सण्णाभूमिगएण सो दारओ दिट्ठो। दारएण वंदिओ आयरिओ। आयरियस्स य तं दारगं पिच्छंतस्स णेहो जाओ। तस्स वि दारगस्स तहेव आयरिएहिं पुच्छियं भो दारग कुतो ते आगमणं। सो दारगो भणइ रायगिहाओ। आयरिएण भणियं रायगिहे तुमं कस्स पुत्तो नत्तुओ वा। सो भणइ, सेज्जंभवो नाम बंभणोत्ति अहं तस्स पुत्तो सो य किर पव्वइओ। तेहिं भणियं। तुमं केण कज्जेण आगओसि। सो भणइ अहं पि पव्वइस्सं। पच्छा सो दारओ भणइ तो भणह बंभं तुम्हे जाणह। आयरिया भणंति जाणेमो। तेण भणियं सो कहिं ति। ते भणंति, सो मम मित्तो एगसरीरभूतो पव्वयाहि तुमं मम सगासे। तेण भणिअं एवं करेमि। तओ आयरिया आगंतुं पडिस्सए आलोअंति सच्चित्तो पडुप्पन्नो सो पव्वइओ। पच्छा आयरिया उवउत्ता केवत्तिकालं एस जीवइत्ति। णायं जावं छम्मासा। ताहे आयरियाणं बुद्धी समुप्पन्ना। इमस्स थोवगं आउं किं कायव्वं ति। तं चउद्दसपुव्वी कम्हि वि कारणे समुप्पन्ने णिज्जूहइत्ति दसपुव्वी पुण अपच्छिमो अवस्समेव णिज्जूहइ। ममंपि इमं कारणं समुप्पन्नं तो अहमवि णिज्जूहामि। ताहे आढत्तो णिज्जूहिउं। ते उ णिज्जूहिज्जंतो वियाले णिज्जूढा थोवावसेसे दिवसे। तेण तं दसवेयालियं भ-

णिद्यत्ति । " अनेन च कथानकेन न केवलं येन चेत्यस्यैव द्वारस्य नावार्थोऽनिहितः । किं तु यद्या प्रतीत्यैतस्यापीति । तथाचाह निर्युक्तिकारः ॥ मणगं पडुच्च सेद्यं—नवेण निदूहिया दसञ्चयणा ॥ वेयालियाइ ठविया तम्हा दसकालियं णामं ॥ १५ ॥ दारं ॥ ॥ २ ॥ मनकं प्रतीत्य मनकाख्यमपत्यमाश्रित्य शय्यंनवेनाचार्येण निर्व्यूढानि पूर्वगताद्धृत्य विरचितानि दशाध्ययनानि द्रुमपुष्पिकादीनि । वेयालियाइ ठवियत्ति । विगतः कालो विकालः विकलनं वा विकाल इति । विकालोऽसकलः खएमश्चेत्यनर्थान्तरम् । तस्मिन् विकालेऽपराह्ने स्थापितानि न्यस्तानि द्रुमपुष्पिकादीन्यध्ययनानि यतः । तस्माद्दशकालिकं नाम । व्युत्पत्तिः पूर्ववत् । दशवैकालिकं वा विकालेन निर्वृत्तम् । संकाशादिपाठाच्चातुरर्थिकष्ठक्, तद्धितेष्वचामादेरित्यादिवृद्धेर्वैकालिकं दशाध्ययननिर्माणं च तद्वैकालिकं च दशवैकालिकमिति गाथार्थः । एवं येन वा यद्या प्रतीत्येति व्याख्यातम् । इदानीं यतो निर्व्यूढानीत्येतद्व्याचिख्यासुराह ॥ आयप्पवायपुव्वा, निदूढा होइ धम्मपन्नत्ती ॥ कम्मप्पवायपुव्वा, पिंमस्स उ एसणा तिविहा ॥ १६ ॥ सच्चप्पवायपुव्वा, निदूढा होइ वक्कसुद्धी उ ॥ अवसेसा निदूढा, नवमस्स उ तइयवत्थूउ ॥ १७ ॥ वीउ वि अ आएसो- गणिपिडगाउ ज्जवालसंगाउ ॥ एअं किर णिदूढं, मणगस्स अणुग्गहट्ठाए ॥१८॥ व्याख्या ॥ इहात्मप्रवादपूर्वं यत्रात्मनः संसारिमुक्ताद्यनेकनेदनिन्नस्य प्रवदनमिति । तस्मान्निर्व्यूढा नवति धर्मप्रज्ञप्तिः षड्जीवनिका इत्यर्थः ॥ तथा कर्मप्रवादपूर्वात् । किम् । पिएमस्य तु एषणा त्रिविधा निर्व्यूढेति वर्तते । कर्मप्रवादपूर्वं नाम यत्र ज्ञानावरणीयादिकर्मणो निदानादिप्रवदनमिति । तस्मात् किम् । पिएमस्यैषणा त्रिविधा गवेषणाग्रहणैषणाग्रासैषणानेदनिन्ना निर्व्यूढा सा पुनस्तत्रामुना संबन्धेन पतति । आधाकर्मोपनोक्ता ज्ञानावरणीयादिकर्मप्रकृतीर्बध्नाति । उक्तं च । " आहाकम्मं नुंजमाणे समणे अठकम्मप्पगडीउ बंधई" इत्यादि । शुद्धपिएमोपनोक्ता चाशुनान्न बध्नातीत्यलं प्रसङ्गेन । प्रकृतं प्रस्तुमः । सत्यप्रवादपूर्वान्निर्व्यूढा नवति वाक्यशुद्धिस्तु । तत्र सत्यप्रवादं नाम यत्र जनपदसत्यादेः प्रवदनमिति । वाक्यशुद्धिर्नाम सप्तममध्ययनम् । अवशेषाणि प्रथमद्वितीयादीनि निर्व्यूढानि नवमस्यैव प्रत्याख्यानपूर्वस्य तृतीयवस्तुन इति । द्वितीयोऽपि चादेशः । आदेशो विध्यन्तरं गणिपिटकादाचार्यसर्वस्वाद्वादशाङ्गादाचारादिलक्षणात् इदं दशकालिकं किलेति पूर्ववत् निर्व्यूढमिति च । किमर्थम् । मनकस्योक्तस्वरूपस्य अनुग्रहार्थमिति गाथात्रयार्थः । एवं यत इति व्याख्यातम् । अधुना यावन्तीत्येतत्प्रतिपाद्यते ॥ दुमपुप्फियाइ या खलु, दस अज्झयणा सनिक्खुयं जाव ॥ अहिगारे विय एत्तो वोछं पत्तेयमेक्केक्कं ॥ १९ ॥ दारं ॥ ३ ॥ व्याख्या ॥ तत्र द्रुमपुष्पिकेति प्रथमाध्ययननाम तदादीनि दशाध्ययनानि । सनिक्खुयं जावत्ति सनि-

द्वव्ययनं यावत् । खलु शब्दो विशेषणार्थः । किं विशिनष्टि । तदन्ये द्वे चूडे यावन्तीति । व्याख्यातं यथा चेत्येतत् । पुनरधिकाराभिधानद्वारेणैव च व्याचिख्यासुः संबन्धकत्वेनेदं गाथादलमाह । अधिकारादपि चातो वक्ष्ये प्रत्येकमेकैकस्मिन् अध्ययने । तत्राध्ययनपरिसमाप्तेर्योऽनुवर्तते सोऽधिकारः । इति गाथार्थः ॥ पढमे धम्मपसंसा, सो य इहेव जिणसासणम्मित्ति ॥ बिइए धिइए सक्का, काउं जे एस धम्मोत्ति ॥२०॥ तइए आयारकहा, उ खुड्डिया आयसंजमो वाउ ॥ तह जीवसंजमो वि य, होइ चउत्थंसि अज्झयणे ॥ २१ ॥ भिक्खविसोही तव सं-जमस्स गुणकारियाउ पंचमए ॥ छठे आयारकहा, महई जोग्गा महयणस्स ॥२२॥ वयणविभत्ती पुण स-त्तमम्मि पणिहाणमठमे भणियं ॥ णवमे विणउ दसमे, समाणियं एस भिक्कुत्ति ॥२३॥ व्याख्या ॥ प्रथमाध्ययने कोऽर्थाधिकार इत्यत आह । धर्मप्रशंसा । दुर्गतौ प्रपतन्तमात्मानं धारयतीति धर्मः तस्य प्रशंसा स्तवः सकलपुरुषार्थानामेव धर्मः प्रधानमित्येवंरूपा । तथान्यैरप्युक्तम् । "धनदोऽर्थार्थिनां प्रोक्तः, कामिनां सर्वकामदः ॥ धर्म एवापवर्गस्य, पारंपर्येण साधकः ॥" इत्यादि ॥ स चात्रैव जिनशासने धर्मो नान्यत्र इहेव निरवद्यवृत्तिसद्भावादेतच्चोत्तरत्रान्यकर्णे वक्ष्यामः । धर्माभ्युपगमे च सत्यपि मा भूदभिनवप्रव्रजितस्याधृतेः संमोह इत्यतस्तन्निराकरणार्थाधिकारवदेव द्वितीयाध्ययनम् । आह च । द्वितीयेऽध्ययनेऽयमर्थाधिकारः । धृत्या हेतुभूतया शक्यते कर्तुम् । जे इति पूरणार्थो निपातः । एष जैनधर्म इति । उक्तं च । "जस्स धिई तस्स तवो, जस्स तवो तस्स सा गई सुलहा ॥ जे अधितिमंतपुरिसा, तवो वि खलु दुल्लभो तेसिं ॥" सा पुनर्धृतिराचारे कार्या न त्वनाचारे इत्यतस्तदर्थाधिकारवदेव तृतीयाध्ययनम् । आह च । तृतीयेऽध्ययने कोऽर्थाधिकार इत्यत आह । आचारगोचरा कथा आचारकथा सा चेहवाणुविस्तरभेदात् । यत आह । क्षुल्लिका लघ्वी सा चात्मसंयमोपायः । संयमनं संयमः । आत्मनः संयम आत्मसंयमस्तदुपायः । उक्तं च ॥ "तस्यात्मा संयमो यो हि सदाचारे रतः सदा ॥ स एव धृतिमान्धर्मस्तस्यैव च जिनोदितः ॥" इति । स चाचारः षड्जीवनिकायगोचरः प्राय इत्यतश्चतुर्थमध्ययनम् । अथवात्मसंयमस्तदन्यजीवपरिपालनमेव तत्त्वतः । इत्यतस्तदर्थाधिकारवदेव चतुर्थमध्ययनम् । आह च । तथा जीवसंयमोऽपि भवति चतुर्थेऽध्ययनेऽर्थाधिकार इति । अपिशब्दादात्मसंयमोपि तद्भाव्येव वर्तते । उक्तं च ॥ "छसु जीवनिकायेसु जे बुहे संजए सदा ॥ से चेव होइ विन्नेए परमत्थेण संजए ॥" इत्यादि । एवमेव धर्मः सर्वदेहे स्वस्थे सति पाल्यते । स चाहारमन्तरा प्रायः स्वस्थो न भवति । स च सावद्येतरभेद इत्यनवद्यो ग्राह्य इत्यतस्तदर्थाधिकारवदेव पञ्चममध्ययनमिति । आह च । भिक्षाविशोधिस्तपःसंयमस्य गुणकारिकेव पञ्चमेऽध्ययनेऽर्थाधिकार इति । तत्र भिक्षणं भिक्षा

तस्या विशोधिः सावद्यपरिहारेणेतरस्वरूपकथनमित्यर्थः । तपःप्रधानः संयमस्तपःसंयमस्तस्य गुणकारिकेवेयं वर्तते इति॥ उक्तं च ॥ "से संजए समरकाए निरवद्याहार जे विउ॥ धम्मकायछिए सम्मं सुहजोगाए साहए" ॥इत्यादि। गोचरप्रविष्टेन च सता स्वाचारं पृष्टेन तद्विदापि न महाजनसमक्षं तत्रैव विस्तरतः कथयितव्यः । अपि तु आलये गुरवो वा कथयन्तीति वक्तव्यमतस्तदर्थाधिकारवदेव षष्ठमध्ययनमिति।आह च। षष्ठेऽध्ययनेऽर्थाधिकार आचारकथा । सापि महती न क्षुल्लिका योग्या उचिता महाजनस्य विशिष्टपरिषद इत्यर्थः । वक्ष्यति च ॥ "गोअरग्गपविठे उ न निसिवइ कछ इ॥ कहं च न पबंधिवा चिठिया णेव संजए" ॥ इत्यादि । आलयगतेनापि तेन गुरुणा वा वचनदोषगुणाभिज्ञेन निरवद्यवचसा कथयितव्यम् । इत्यतस्तदर्थाधिकारवदेव सप्तमध्ययनमिति । आह च । वयणविजत्तीत्यादि। वचनस्य विजक्तिर्वचनविजक्तिः । विजजनं विजक्तिः एवंभूतमनवद्यमित्थंभूतं च सावद्यमित्यर्थः । पुनःशब्दः शेषाध्ययनार्थाधिकारेज्यः अस्याधिकृतार्थाधिकारस्य विशेषणार्थ इति सप्तमेऽध्ययने अर्थाधिकार इति । उक्तं च ॥ " सावद्यणवज्जाणं, वयणाणं जो ण याणइ विसेसं ॥ वोत्तुं पि तस्स न खमं, किमंग पुण देसणं काउं " इत्यादि । तच्च निरवद्यं वचः स्वाचारे प्रणिहितस्य जवति इत्यतस्तदर्थाधिकारवदेवाष्टममध्ययनमिति । आह च । प्रणिधानमष्टमेऽध्ययनेऽर्थाधिकारत्वेन जणितमुक्तम् । प्रणिधानं नाम विशिष्टश्चेतोधर्म इति । उक्तं च ॥ " पणिहाणरहियस्साहा निरवयंति जासियं ॥ सावद्यतुल्लं विन्नेयं मज्ञ्ज्ञेणेह संवुडं " इत्यादि ॥ आचारप्रणिहितश्च यथोचितविनयसंपन्न एव जवतीत्यतस्तदर्थाधिकारवदेव नवममध्ययनमिति । आह च । नवमेऽध्ययने विनयोऽर्थाधिकार इति।उक्तं च॥"आयारपणिहाणंमि, से सम्मं वट्टई बुद्धे ॥ णाणादीणं विणीए जे मोरकठाणिविगिछिए ॥" इत्यादि ॥ एतेषु एव नवस्वध्ययनार्थेषु यो व्यवस्थितः स सम्यग् जिक्षुरित्यनेन संबन्धेन सजिक्ष्वध्ययनमिति । आह च । दशमेऽध्ययने समाप्तिं नीतमिदं साधुक्रियाजिधायकं शास्त्रम्। एतत्क्रियासमन्वित एव जिक्षुर्जवत्यत आह एष जिक्षुरिति गाथाचतुष्टयार्थः । स एवं गुणयुक्तोऽपि जिक्षुः कदाचित् कर्मपरतन्त्रत्वात्कर्मणश्च बलवत्त्वात्सीदेत् । ततस्तस्य स्थिरीकरणं कर्तव्यमतस्तदर्थाधिकारवदेव चूडाद्वयमित्याह ॥ दो अप्रयणा चूलिय, विसीययंते थिरीकरणमेगं॥ बिइए विवित्तचरिया असीयणगुणाइरेगफला॥२४॥ व्याख्या॥ द्वे अध्ययने। किम्। चूडा चूडेव चूडा तत्र प्रमादवशाद्विषीदति सति साधौ संयमे स्थिरीकरणमेकं प्रथमं स्थिरीकरणफलमित्यर्थः । तथा च तत्रावधानप्रेक्षिणः साधोः दुःप्रजीवित्वे नरकपातादयो दोषा वर्ण्यन्त इति ।तथा च द्वितीयेऽध्ययने विविक्तचर्या वर्ण्यते । किंभूता असीदनगुणातिरेकफला ।

तत्र विविक्तचर्यैकान्तचर्या द्रव्यक्षेत्रकालभावेष्वसंबद्धता । उपलक्षणं चैषानियतचर्यादीनामिति । अलीदनगुणातिरेकः फलं यस्याः सा तथाविधेति गाथार्थः । दसकालिअस्स एसो, पिंमत्थो वन्निउ समासेणं ॥ एत्तो एक्केक्कं पुण, अज्झयणं कित्तइस्सामि ॥ २५ ॥ व्याख्या ॥ दशकालिकस्य प्राग्निरूपितशब्दार्थस्यैषोऽनन्तरोदितः पिण्डार्थः सामान्यार्थो वर्णितः प्रतिपादितः समासेन संक्षेपेण । अत ऊर्ध्वं पुनरेकैकमध्ययनं कीर्तयिष्यामि प्रतिपादयिष्यामीति । पुनःशब्दस्य व्यवहित उपन्यास इति गाथार्थः। तत्र प्रथमाध्ययनं द्रुमपुष्पिका। तस्य च चत्वार्यनुयोगद्वाराणि भवन्ति। तद्यथा, उपक्रमो निक्षेपोऽनुगमो नयः। एषां चतुर्णामप्यनुयोगद्वाराणामध्ययनादावुपन्यासः । तत्रैतं च क्रमोपन्यासप्रयोजनमावश्यकविशेषविवरणादवसेयं स्वरूपं च प्रायश इति । प्रकृताध्ययनस्य च शास्त्रीयोपक्रमे आनुपूर्व्यादिभेदेषु स्वबुद्ध्यवतारः कार्यः । अर्थाधिकारश्च वक्तव्यः । तथाचाह निर्युक्तिकारः ॥ पढमज्झयणं दुमपु–प्फियं ति चत्तारि तस्स दाराइं ॥ वन्नेउवक्कमाई, धम्मपसंसाइ अहिगारो ॥ २६ ॥ व्याख्या ॥ प्रथमाध्ययनं द्रुमपुष्पिकेति। अस्य नामनिष्पन्ननिक्षेपावसर एव शब्दार्थं वक्ष्यामः । चत्वारि तस्य द्वाराण्यनुयोगद्वाराणि । किम् । वर्णयित्वोपक्रमादीनीति । किम् । धर्मप्रशंसयाधिकारो वाच्य इति गाथार्थः । तत्र निक्षेपः। स च त्रिविधस्तद्यथा, ओघनिष्पन्नो नामनिष्पन्नः सूत्रालापकनिष्पन्नश्चेति। तत्रौघः सामान्यं श्रुताभिधानम्। तथाचाह निर्युक्तिकारः॥ ओहो जं सामन्नं, सुआभिहाणं चउव्विहं तं च॥ अज्झयणं अज्झीणं, आयज्झवणा य पत्तेअं ॥२७॥ व्याख्या॥ ओघो यत्सामान्यं श्रुताभिधानं श्रुतनाम चतुर्विधम्। तच्च कथम्। अध्ययनमक्षीणमायः क्षपणा च। इदं च प्रत्येकं पृथक्पृथक्। किम्॥ नामाइचउप्पेयं, वन्नेऊणं सुआणुसारेणं ॥ दुमपुप्फिअ आउंचं, चउसुं पि कमेण भावेसु ॥ २८ ॥ व्याख्या ॥ नामादिचतुर्भेदं वर्णयित्वा । तद्यथा । नामाध्ययनं स्थापनाध्ययनं द्रव्याध्ययनं भावाध्ययनं चेत्येवमक्षीणादीनामपि न्यासः कर्तव्यः॥ श्रुतानुसारेणानुयोगद्वाराख्यसूत्रानुसारेण। किम्। द्रुमपुष्पिका आयोज्या प्रकृताध्ययनं संबन्धनीयम्। चतुर्ष्वप्यध्ययनादिषु क्रमेण भावेष्विति गाथार्थः । सांप्रतं भावाध्ययनादिशब्दार्थं प्रतिपादयन्नाह ॥ अज्झप्पस्साणयणं, कम्माणं अवचउ उवचिआणं ॥ अणुवचउ अ नवाणं, तम्हा अज्झयणमिछंति ॥ २९ ॥ अहिगम्मंति अथा, इमेण अहिगं च नयणमिछंति ॥ अहिगं च साहु गछइ, तम्हा अज्झयणमिछंति ॥ ३० ॥ जह दीवा दीवसयं, पइप्पई सो अ दिप्पई दीवो ॥ दीवसमा आयरिया, दिप्पंति परं च दीवंति ॥ ३१ ॥ नाणस्स दंसणस्स वि, चरणस्स य जेण आगमो होई ॥ सो होइ भाव आउ, आउ लाहो त्ति निद्दिठो ॥ ३२ ॥ अठविहं कम्मरयं, पोराणं जं खवेइ जोगेहिं॥ एअं भावज्झयणं, नेअव्वं आणुपुव्वीए ॥३३॥

श्रासां गमनिका । इह प्राकृतशैल्या बान्दसत्वाच्च अच्चप्पस्साणयणं पकारसकारआकारणकारलोपे श्रज्जयणं ति जन्नइ। तच्च संस्कृतेऽध्ययनम् । जावार्थस्त्वयम्। अधि आत्मनि वर्तत इति निरुक्तादध्यात्मं चेतः तस्यानयनम्। आनीयतेऽनेनेत्यानयनम्। इह कर्ममलरहितः खल्वात्मैव चेतःशब्देन गृह्यते । यथावस्थितस्य शुद्धस्य चेतस आनयनमित्यर्थः । तथा चैतदज्यासाज्जवत्येव । किम्। कर्मणां ज्ञानावरणीयादीनामपचयो ह्रासः । किंविशिष्टानाम्। उपचितानां मिथ्यात्वादिजिरुपदिग्धानां बद्धानामिति जावः। तथा अनुपचयश्च अवृद्धिलक्षणः नवानां प्रत्यग्राणां कर्मणाम्। यतश्चैवं तस्मात् प्राकृतशैल्याध्यात्मानयनमेवाध्ययनमिछन्त्याचार्या इति गाथार्थः । अधिगम्यन्ते परिछिद्यन्ते वा अर्था अनेनेत्यधिगमनमेव प्राकृतशैल्या तथाविधार्थप्रदर्शकत्वाद्वचसोऽध्ययनमिति । तथा अधिकं च नयनमिछन्त्यस्याप्यर्थप्रदर्शकत्वादेव वचसोऽयमर्थः । अयवय इत्यादिदएककधातुपाठान्नी तिर्नयनम्। जावे ल्युट् प्रत्ययः। परिछेद इत्यर्थः। अधिकं नयनमधिकनयनं चार्थतोऽध्ययनमिछन्ति । चशब्दस्य च व्यवहित उपन्यासः । अधिकं च साधुर्गछति । किमुक्तं जवति । अनेन करणजूतेन साधुर्बोधसंयममोक्षान्प्रत्यधिकं गछति । यस्मादेवं तस्मादध्ययनमिछन्ति । इह च सर्वत्र अधिकं नयनमध्ययनमित्येवं योजना कार्येति गाथार्थः। इदानीमक्षीणम् । तच्च जावाक्षीणमिदमेव । शिष्यप्रदानेऽप्यक्षयत्वात् । तथाचाह । यथा दीपाद्दीपशतं प्रदीप्यते स च दीप्यते दीपः एवं दीपसमा दीपतुल्या आचार्या दीप्यन्ते स्वतो विमलमत्याद्युपयोगयुक्तत्वात्परं च विनेयं दीपयन्ति प्रकाशयन्त्युज्ज्वलं वा कुर्वन्तीति गाथार्थः । इदानीमायः । स च जावत इदमेव। यत आह । ज्ञानस्य मत्यादेर्दर्शनस्य चौपशमिकादेश्चरणस्य च सामायिकादेर्येन हेतुजूतेन गमो जवति प्राप्तिर्जवति । स जवति जावायः। आयो लाज इति निर्दिष्टः । अध्ययनेन च हेतुजूतेन ज्ञानाद्यागमो जवतीति गाथार्थः । अधुना क्षपणा । सापि जावत इदमेवेति। आह च अष्टविधमष्टप्रकारं कर्मरजस्तत्र जीवगुणरञ्जनपरत्वात्कर्मैव रजः कर्मरजः पुराणं प्रागुपात्तं यद्यस्मात्क्षपयति योगैरन्तःकरणादिजिरध्ययनं कुर्वन्। तस्मादिदमेव कारणे कार्योपचारात् क्षपणेति । तथाचाह इदं जावाध्ययनं नेतव्यं योजनीयमानुपूर्व्या परिपाट्या अध्ययनाक्षीणादिष्विति गाथार्थः । उक्त ओघनिष्पन्नो निक्षेपः। सांप्रतं नामनिष्पन्न उच्यते। तत्रौघनिष्पन्नेऽध्ययनम्। नामनिष्पन्ने द्रुमपुष्पिकेति। आह। द्रुम इति कः शब्दार्थः। उच्यते । "डुडुगतौ" इत्यस्य द्रुरस्मिन् देशे विद्यत इति तदस्यास्त्यस्मिन्निति मतुपि प्राप्ते "डुडुभ्यां मः" इति मप्रत्ययान्तस्य द्रुम इति जवति । सांप्रतं द्रुमपुष्पनिक्षेपप्ररूपणायाह ॥ णामडुमो ठवणडुमो, दव्वडुमो चेव होइ जावडुमो॥ एमेव य पुप्फस्स वि, चउव्विहो होइ निक्खेवो ॥ ३४ ॥

नामद्रुमोपि यस्य द्रुम इति नामाभिधानम्। स्थापनाद्रुमो द्रुम इति स्थापना, द्रव्यद्रुमश्चैव भवति भावद्रुमः। तत्र द्रव्यद्रुमो द्विधा। आगमतो नोआगमतश्च। आगमतो ज्ञातानुपयुक्तः। नोआगमतस्तु ज्ञशरीरभव्यशरीरोभयव्यतिरिक्तस्त्रिविधः। तद्यथा। एकभविको बद्धायुष्कोऽभिमुखनामगोत्रश्च। तत्रैकभविको नाम य एकेन भवेनानन्तरं द्रुमेषूत्पत्स्यते। बद्धायुष्कस्तु येन द्रुमनामगोत्रे कर्मणी बद्धे इति। अभिमुखनामगोत्रस्तु येन ते नामगोत्रे कर्मणी उदीरणावलिकायां प्रक्षिप्ते इति। अयंच त्रिविधोऽपि भाविभावद्रुमकारणत्वाद्द्रव्यद्रुम इति। भावद्रुमोपि द्विविधः। आगमतो नोआगमतश्च। तत्रागमतो ज्ञातोपयुक्तः। नोआगमतस्तु द्रुम एव द्रुमनामगोत्रे कर्मणी वेदयन्निति। एवमेव च यथा द्रुमस्य तथा किं पुष्पस्यापि वस्तुतस्तद्विकारभूतस्य चतुर्विधो भवति निक्षेप इति गाथार्थः। सांप्रतं नानादेशजविनेयगणासंमोहार्थमागमे द्रुमपर्यायशब्दान् प्रतिपादयन्नाह॥ दुमा य पायवा रुक्खा आगमा विडिमा तरू॥ कुहा महीरुहा वच्छा रोवगा रुंजगाइ अ॥ ३५॥ द्रुमाश्च पादपा वृक्षा आगमा विटपिनः तरवः कुजा महीरुहा वत्सा रोपका रुञ्जकादयश्च। तत्र द्रुमान्वर्थसंज्ञा पूर्ववत्। पद्भ्यां पिबन्तीति पादपा इत्येवमन्येषामपि यथासंभवमन्वर्थसंज्ञा वक्तव्या। रूढिदेशीशब्दा वा एत इति गाथार्थः। इदानीं पुष्पैकार्थिकप्रतिपादनायाह॥ पुप्फाणि अ कुसुमाणि अ, फुल्लाणि तहेव होंति पसवाणि॥ सुमणाणि अ सुहमाणि अ, पुप्फाणं होंति एगट्ठा॥३६॥ व्याख्या॥ पुष्पाणि कुसुमानि चैव फुल्लानि प्रसवानि च सुमनसश्चैव सूक्ष्माणि सूक्ष्मकायिकानि चेति। सांप्रतमेकवाक्यतया द्रुमपुष्पिकाध्ययनशब्दार्थ उच्यते। द्रुमस्य पुष्पं द्रुमपुष्पम्। अवयवलक्षणः षष्ठीसमासः। द्रुमपुष्पशब्दस्य "प्रागिवात्कः" इति वर्तमाने अज्ञाते कुत्सिते संज्ञायां कनिति कनि प्रत्यये नकारलोपे च कृते द्रुमपुष्पिक इति प्रातिपदिकस्य स्त्रीत्वविवक्षायाम् "अजाद्यतष्टाप्" इति टाप्प्रत्ययेऽनुबन्धलोपे च कृते "प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः" इतीत्वे कृते "अकः सवर्णे दीर्घः" इति दीर्घत्वे परगमने च द्रुमपुष्पिकेति भवति द्रुमपुष्पोदाहरणयुक्ता द्रुमपुष्पिकेति। द्रुमपुष्पिका चासौ अध्ययनं चेति समानाधिकरणस्तत्पुरुषः। द्रुमपुष्पिकाध्ययनमिति। अस्य चैकार्थिकानि प्रतिपादयन्नाह॥ दुमपुप्फिआ य आहार-एसणागोअरे तया उंछो॥ मेस जलूगा सप्पे, वणक्खइसुगोलपुत्तुदए॥३७॥ व्याख्या॥ तत्र द्रुमपुष्पोदाहरणयुक्ता द्रुमपुष्पिकेति। वक्ष्यति च "जहा दुमस्स पुप्फेसु" इत्यादि। तद्यथा आहारस्यैषणा आहारैषणा गवेषणाग्रहणग्रासैषणादिग्रहस्ततश्च तदर्थसूचकत्वादाहारैषणेति। तथा गोचरः सामयिकत्वाद्गोरिव चरणं गोचरोऽन्यथा गोचारः। तदर्थसूचकत्वाच्चाधिकृताध्ययनविशेषो गोचर इत्येवं सर्वत्र

जावना कार्येति। जावार्थस्तु, यथा गौश्चरत्येवमविशेषेण साधुनाप्यटितव्यं न विजव-मङ्गीकृत्योत्तमाधममध्यमेषु कुलेष्विति वणिग्वत्सकदृष्टान्तेनेति। तथा। त्वगिति। त्व-गिवासारं जोक्तव्यमित्यर्थसूचकत्वात्त्वगुच्यत इति। उक्तं च परममुनिजिः " जहा चत्तारि घुणा पन्नत्ता। तं जहा। तयक्खाए उल्लिक्खाए कठक्खाए सारक्खाए। एमेव चत्तारि जिक्कुगा अ पन्नत्ता। तं जहा। तयक्खाए। उल्लिक्खाए कठक्खाए सारक्खाए। तयक्खाए णामं एगे नो सारक्खाए।सारक्खाए णामं एगे नो तयक्खाए। एगे तयक्खाए वि सारक्खाए वि। एगे नो तयक्खाए णो सारक्खाए। तयक्खायसमणस्स णं जिक्कुस्स सारक्खायसमाणे तवे जवइ । एवं जहा गाणे तहा एव दट्ठवं । जावार्थस्तु जावत-स्त्वक्कल्पासारजोक्तुः कर्मजेदमङ्गीकृत्य वज्रसारं तपो जवति। तथोञ्छमित्यज्ञातपिण्डोंछ-सूचकत्वादिति।तथा मेष इति।यथा मेषोऽल्पेऽप्यम्जसि अनुछालयन्नेवाम्जः पिबति। एवं साधुनापि जिक्षाप्रविष्टेन बीजाक्रमणादिष्वनाकुलेन जिक्षा ग्राह्येत्येवंविधार्थसू-चकत्वादधिकृताजिधानप्रवृत्तिरिति। तथा जलौका इति। अनेषणाप्रवृत्तदायकस्य मृडु-जावनिवारणार्थसूचकत्वादिति। तथा सर्प इति। यथासावेकदृष्टिर्जवत्येवं गोचरग-तेन संयमैकदृष्टिना जवितव्यमित्यर्थसूचकत्वादिति। अथवा । यथा ड्रागस्पृशन् सर्पो बिलं प्रविशत्येवं साधुनाप्यनास्वादयता जोक्तव्यमिति।तथा व्रण इत्यरक्तद्विष्टेन व्रणलेपदानवज्ञोक्तव्यम् । तथाक्ष इत्यक्षोपाङ्गदानवचेति उक्तं च व्रणलेपाक्षोपाङ्गवद-संगयोगजरमात्रयात्रार्थम्। पन्नग इवाभ्यवहरेदाहारम्। इसु त्ति। तथा इषुः शरो जण्यते तत्र सूचनात्सूत्रमिति कृत्वा "॥ जह रहिर्उणुवउत्तो इसुणा लक्खं ण विंधइ तहेव ॥ साहू गोअरपत्तो संयमलक्खम्मि नायवा॥" गोल इति। "जह जउगोलो अगणि--स्स णाइदूरे ण आवि आसन्ने॥ सक्कइ काऊण तहा, संजमगोलो गिहत्थाणं॥ दूरे अणेसणा-इं, इयरम्मि तेण संकाइं ॥ तम्हा मियजूमीए चिठिया गोयरग्गगउं ॥ ३ ॥" पुत्र इति। पुत्रमांसोपमया जोक्तव्यम्। सुसुमादृष्टान्तोऽत्र वक्तव्यः। उदकमिति । पूत्यु-दकोपमानतः खल्वन्नपानमुपजोक्तव्यमित्यत्रोदाहरणम्। " जहा एगेणं वाणियएणं दारिद्दडुक्खाजिजूएणं कहिं वि हिंडंतेणं रयणदीवं पावित्ता तेल्लुक्कसुंदरा अणग्घया रयणा समासादिआ।सो अ ते चोराकुलदीहरूाणजएण ण सक्कइ णित्थाविउणमुवउं-गन्नूमिमाणेउं । तउं सो बुद्धिकोसल्लेण ताणि एगम्मि पएसे ठवेऊण जुण्णे जरप-ढाणे घेत्तुं पढिउं गहिल्लवेसेण " रयणवाणिउं गच्छइ त्ति " जणइ। तिण्णिवारे जाहे कोइ ण उठइ। ताहे घेत्तूण पयाउं अडवीए तिसाए गहिउं जाव कुहियपाणिअं छिल्लरम्मि विणठं पासइ। तठ बहवे हरिणादयो मया तेण तं सबं उदगवसाङ्जाया। ताहे तं तेण अणुस्ससियाए अणासायंतेण पीअं नित्थारियाणि अणेण रयणाणि।

एवं रयणट्ठाणगाणि णाणदंसणचरित्ताणि चोरट्ठाणिआ विसया कुहिउंदगट्ठाणिआ-णि फासुगेसणिज्जाणि अंतपंताणि आहाराणि आहरंतेण ताहे तप्फलेण जहा वाणियगो इह भवे सुही जाओ । एवं साहू वि सुही भविस्सइ त्ति । अडविट्ठाणीअं संसारं णित्थरेइ त्ति । एवमेतान्यर्थैकार्थिकानि अथाधिकारा एवान्य इति गाथार्थः । उक्तो नामनिष्पन्नः सांप्रतं सूत्रालापकनिष्पन्नस्यावसरः । स च प्राप्त-(ल?)-क्षणोऽपि न निक्षिप्यते । कस्मात् कारणात् । यस्मादस्ति इह तृतीयमनुयोगद्वारमनुगमाख्यं तत्र निक्षिप्त इह निक्षिप्तो भवति । तस्माल्लाघवार्थं तत्रैव निक्षेप्स्यामः । अत्र चाक्षेप-परिहारावावश्यकविशेषविवरणादवसेयौ । सांप्रतमनुगमः । स च द्विधा सूत्रानुगमो निर्युक्त्यनुगमश्च । तत्र निर्युक्त्यनुगमस्त्रिविधः । तद्यथा । निक्षेपनिर्युक्त्यनुगमः । उपो-द्घातनिर्युक्त्यनुगमः । सूत्रस्पर्शनिर्युक्त्यगमश्चेति । तत्र निक्षेपनिर्युक्त्यनुगमो गतः । य एषोऽध्ययनादिनिक्षेप इति । उपोद्घातनिर्युक्त्यनुगमस्तु द्वारगाथाद्वयादवसेयः । तच्चे-दम् । उद्देसयनिद्देसय०गाहा ॥ किंकइविहं गाहा० ॥ अस्य च द्वारगाथाद्वयस्य समुदाया-र्थोऽवयवार्थश्चावश्यकविशेषविवरणादेवावसेय इति । प्रकृतयोजना पुनस्तीर्थकरोपो-द्घातमभिधायाचार्यसुधर्मस्य च तत्प्रवचनस्य पश्चाज्जम्बूनाम्नस्ततः प्रभवस्य ततोऽप्या-चार्यशय्यंभवस्य पुनर्यथा तेनेदं निर्व्यूढमिति तथा कथनेन कार्या इत्यादि । जेण व जं च पडुच्चेत्यादिना । यत्पूर्वमुक्तं तदत्रैव क्रमप्राप्ताभिधानत्वात्तत्रायुक्तमिति । न, अपान्तरा-लोपोद्घातप्रतिपादकत्वेन तत्राप्युपयोगित्वादिति । आह । एवमपि महदिदं तदर्थपूर्वकत्वा-दपान्तरालोपोद्घातस्यात्रैवाभिधानं न्याय्यमिति । न, प्रस्तुतशास्त्रान्तरङ्गत्वेन तत्राप्यु-पयोगित्वादिति कृतं प्रसङ्गेनाक्षरगमनिकामात्रफलत्वात्प्रयासस्य । गत उपोद्घातनि-र्युक्त्यनुगमः । सांप्रतं सूत्रस्पर्शनिर्युक्त्यनुगमावसरः । स च सूत्रे सति भवति । आह । यद्येवं निक्षेपस्यातोऽनर्थकः । न, निर्युक्तिसामान्यादिति । सूत्रं च सूत्रानुगमे । स चावसरप्राप्त एव । इह चास्खलितादिप्रकारं शुद्धं सूत्रमुच्चारणीयम् । तद्यथा । अ-स्खलितममिलितमव्यत्याम्रेडितमित्यादि यथानुयोगद्वारेषु । ततस्तस्मिन्नुच्चारिते सति केषां भगवतां साधूनां केचनार्थाधिकारा अधिगता भवन्ति केचनान-धिगताः । तत्रानधिगतार्थाधिगमायाधिगतस्मृतिविनेयानुग्रहाय च प्रतिपदं व्याख्येयम् । व्याख्यालक्षणं चेदम् "॥ संहिता च पदं चैव पदार्थः पदविग्रहः ॥ चालना प्रत्यवस्थानं व्याख्या तन्त्रस्य षड्विधा ॥" इति । अलं प्रसङ्गेन प्रकृतं प्र-स्तुमः । किं च प्रकृतम् । सूत्रानुगमे सूत्रमुच्चारणीयमिति । तच्चेदं सूत्रम् ॥

१ [illegible] । २ [illegible] । [illegible]

तथा विपुलतरं तु प्रभूततरं तु कथयन्ति पुष्ठाए त्ति। शिष्यप्रश्ने सति पट्टप्रज्ञोऽयमित्यवगमादिति गाथार्थः ॥ एवं तावत्समासेन व्याख्यालक्षणयोजना ॥ कृतेयं प्रस्तुते सूत्रे कार्यैवमपरेष्वपि ॥ १ ॥ ग्रन्थविस्तरदोपान्न वक्ष्यामः। उपयोगे तु वक्ष्यामः प्रतिसूत्रम्। यतः सूत्रस्पर्शकोऽधुना प्रोच्यते। अनुगमनिर्युक्तिविभागश्च विशेषतः सामायिकवृद्धभाष्याज्ज्ञेयः सूत्रोदितः। यतः " होइ कयत्थो वोत्तुं, सपयच्छेअं सुअं सुआणुगमे ॥ सुत्तालावगता सो नामा दिण्णा सविणिउंगं॥ सुत्तप्फासिअनिज्जु—त्तिणिउंगासेसउं पयत्थाइ॥ पायं सो विय नेगम-णयाइणयगोअरो होइ ॥ एवं सुत्ताणुगमो, सुत्तालावगकउ अ निक्खेवो ॥ सुत्तप्फासिअणिज्जु—त्तिणया अ वच्चंति समगं तु॥" इत्यलं प्रसङ्गेन गमनिकामात्रमेतत्। तत्र धर्मपदमधिकृत्य सूत्रस्पर्शकनिर्युक्तिप्रतिपादनायाह ॥ णामं ठवणा धम्मो, दव्वधम्मो अ भावधम्मो उ ॥ एएसिं नाणत्तं वुच्छामि अहाणुपुव्वीए ॥३९॥ व्याख्या ॥ णामं ठवणा धम्मो त्ति । अत्र धर्मशब्दः प्रत्येकमभिसंबध्यते । नामधर्मः स्थापनाधर्मो द्रव्यधर्मो भावधर्मश्च । एतेषां नानात्वं भेदं वक्ष्येऽभिधास्ये यथानुपूर्व्या यथानुपरिपाट्येति गाथार्थः । सांप्रतं नामस्थापने क्षुण्णत्वादागमतोनोआगमतश्च ज्ञात्रनुपयुक्तज्ञशरीरेतरभेदांश्चानादृत्य ज्ञशरीरभव्यशरीरव्यतिरिक्तद्रव्यधर्माद्यभिधित्सयाह ॥ दव्वं च अत्थिकाउ, पयारधम्मो अ भावधम्मो अ ॥ दव्वस्स पज्जवा जे, ते धम्मा तस्स दव्वस्स ॥४०॥ व्याख्या ॥ इह त्रिविधोऽधिकृतो धर्मः। तद्यथा द्रव्यधर्मः । अस्तिकायधर्मः प्रचारधर्मश्चेति । तत्र द्रव्यं चेत्यनेन धर्मधर्मिणोः कथं चिदभेदाद्द्रव्यधर्ममाह । तथास्तिकाय इत्यनेन तु सूचनात् सूत्रमिति कृत्वा उपलक्षणत्वादवयव एव समुदायशब्दोपचारादस्तिकायधर्म इति । प्रचारधर्मश्चेत्यनेन ग्रन्थेन द्रव्यधर्मदेशमाह । भावधर्मश्चेत्यनेन तु भावधर्मस्य स्वरूपमाह । सांप्रतं प्रथमोद्दिष्टद्रव्यधर्मस्वरूपाभिधित्सयाह । द्रव्यस्य पर्याया ये उत्पादविगमादयस्ते धर्मास्तस्य द्रव्यस्य। ततश्च द्रव्यस्य धर्मा द्रव्यधर्मा इत्यन्यासंसक्तैकद्रव्यधर्माभावप्रदर्शनार्थो बहुवचननिर्देश इति गाथार्थः । इदानीमस्तिकायादिधर्मस्वरूपप्रतिपिपादयिषयाह ॥ धम्मत्थिकायधम्मो, पयारधम्मो य विसयधम्मो उ ॥ लोइयकुप्पावयणिअ—लोगुत्तरलोगणेगविहो ॥ ४१ ॥ व्याख्या ॥ धर्मग्रहणाद्धर्मास्तिकायपरिग्रहः । ततश्च धर्मास्तिकाय एव गत्युपष्टम्भकोऽसंख्येयप्रदेशात्मकः अस्तिकायधर्म इति । अन्ये तु व्याचक्षते । धर्मास्तिकायादिस्वभावोऽस्तिकायधर्म इत्येतच्चायुक्तम् । तत्र धर्मास्तिकायादीनां द्रव्यत्वेन तस्य द्रव्यधर्माव्यतिरेकादिति। तथा प्रचारधर्मश्च विषयधर्म एव। तुशब्दस्यैवकारार्थत्वात्। तत्र प्रचरणं प्रचारः। प्रकर्षगमनमित्यर्थः । स एवात्मस्वभावत्वाद्धर्मः प्रचारधर्मः। स च किम्। विषीदन्त्येतेषु प्राणिन इति विषया रूपादयस्तद्धर्म

एव । तथा च वस्तुतो विषयधर्म एवायं यद्भागाविमान् सत्वस्तेषु प्रवर्तत इति। चक्षुरादीन्द्रियवशतो रूपादिषु प्रवृत्तिः प्रचारधर्म इति हृदयम् । प्रधानसंसारनिबन्धनत्वेन चास्य प्राधान्यख्यापनार्थं द्रव्यधर्मात्पृथगुपन्यासः । इदानीं भावधर्मः । स च लौकिकादिभेदभिन्न इति। आह च, लौकिकः कुप्रावचनिकः। लोकोत्तरस्त्वत्र । लोगो णेगविहो त्ति। लौकिकोऽनेकविध इति गाथार्थः।तदेवानेकविधत्वमुपदर्शयन्नाह ॥ गम्मपसुदेसरज्जे, पुरवरगामगणगोठिराईणं ॥ सावज्जो उ कुतित्थिय–धम्मो न जिणेहिं उ पसत्थो ॥ ४२ ॥ व्याख्या ॥ तत्र गम्यधर्मो यथा दक्षिणापथे मातुलदुहिता गम्या उत्तरापथे पुनरगम्यैव । एवं भक्ष्याभक्ष्यपेयापेयविभाषा कर्तव्येति । पशुधर्मो मात्रादिगमनलक्षणः । देशधर्मो देशाचारः । स च प्रतिनियत एव नेपथ्यादिलिङ्गभेद इति । राज्यधर्मः प्रतिराज्यं भिन्नः । स च करादिः । पुरवरधर्मः प्रतिपुरवरं भिन्नः कचित्कश्चिद्विशिष्टोऽपि पौरभाषाप्रतिदानादिलक्षणः । सद्वितीया योषिद्गेहान्तरं गच्छतीत्यादिलक्षणो वा । ग्रामधर्मः । प्रतिग्रामं भिन्नः । गणधर्मो मल्लादिगणव्यवस्था । यथा समपादपातेन विषमग्रह इत्यादि । गोष्ठीधर्मो गोष्ठीव्यवस्था । इह च समवयःसमुदायो गोष्ठी । तद्व्यवस्था पुनर्वसन्तादावेवं कर्तव्यमित्यादिलक्षणा । राजधर्मो दुष्टेतरनिग्रहपरिपालनादिरिति । भावधर्मता चास्य गम्यादीनां विषयतया भावरूपत्वाद्द्रव्यपर्यायत्वाद्वा तस्यैव च द्रव्यानपेक्षस्य विवक्षितत्वाल्लौकिकैर्वा भावधर्मत्वेनेष्टत्वात्।देशराज्यादिभेदश्चैकदेश एवानेकराज्यसंभव इत्येवं सुधिया भाव्यम् । इत्युक्तो लौकिकः । कुप्रावचनिक उच्यते । इत्यसावपि सावद्यप्रायो लौकिककल्प एव । यत आह "सावज्जो उ" इत्यादि । अवद्यं पापं सहावद्येन सावद्यम् । तुशब्दस्त्वेवकारार्थः । स चावधारणे । सावद्य एव । कः । कुतीर्थिकधर्मः चरकपरिव्राजकादिधर्म इत्यर्थः । कुत एतदित्याह । न जिनैरर्हद्भिस्तुशब्दादन्यैश्च प्रेक्षापूर्वकारिभिः प्रशंसितः स्तुतः । सारम्भपरिग्रहत्वात् । अत्र बहु वक्तव्यम् । तत्तु नोच्यते गमनिकामात्रफलत्वात्प्रस्तुतव्यापारस्येति गाथार्थः । उक्तः कुप्रावचनिकः । सांप्रतं लोकोत्तरं प्रतिपादयन्नाह ॥ दुविहो लोगुत्तरिओ, सुअधम्मो खलु चरित्तधम्मो अ ॥ सुअधम्मो सज्झाओ, चरित्तधम्मो समणधम्मो ॥ ४३ ॥ व्याख्या ॥ द्विविधो द्विप्रकारो लोकोत्तरो लोकप्रधानो धर्म इति वर्तते । तथा चाह । श्रुतधर्मः खलु चारित्रधर्मश्च। तत्र श्रुतं द्वादशाङ्गं तस्य धर्मः श्रुतधर्मः। खलुशब्दो विशेषणार्थः। किं विशिनष्टि। स हि वाचनादिभेदाद्भिन्न इत्याह च।श्रुतधर्मः स्वाध्यायवाचनादिरूपः तत्त्वचिन्तायां धर्महेतुत्वात्कर्म इति। तथा चारित्रधर्मश्च तत्र "चर गतिभक्षणयोः"इत्यस्य "अर्तिलूधूसूखनसहचर इत्र" इतीत्रन्प्रत्ययान्तस्य चरित्रमिति भवति चरन्त्यनिन्दितमनेनेति च-

रित्रं क्षयोपशमरूपं तस्य भावश्चारित्रमशेषकर्मक्षयाय चेष्टेत्यर्थः। ततश्चारित्रमेव धर्मः चारित्रधर्म इति । चः समुच्चये । अयं च श्रमणधर्म एवेत्याह । चारित्रधर्मः श्रमणधर्म इति । तत्र श्राम्यतीति श्रमणः "कृत्यल्युटो बहुलम्" इति वचनात्कर्तरि ल्युट्। श्राम्यतीति तपस्यतीति । एतदुक्तं भवति । प्रव्रज्यादिवसादारभ्य सकलसावद्ययोगविरतो गुरूपदेशादनशनादि यथाशक्त्याप्राणोपरमात्तपश्चरतीति। उक्तं च । "॥ यः समः सर्वभूतेषु त्रसेषु स्थावरेषु च ॥ तपश्चरति शुद्धात्मा श्रमणोऽसौ प्रकीर्तितः ॥ १ ॥" इति । तस्य धर्मः स्वभावः। श्रमणधर्मश्च क्षान्त्यादिलक्षणो वक्ष्यमाण इति गाथार्थः । उक्तो धर्मः । सांप्रतं मङ्गलावसरः।तच्च प्राग्निरूपितशब्दार्थमेव । तत्पुनर्नामादिभेदतश्चतुर्धा। तत्र नामस्थापने क्षुण्णत्वाल्लाघवार्थमनादृत्य द्रव्यभावमङ्गलाभिधित्सयाह ॥ दवे भावे वि अ मंगलाइं दव्वम्मि पुन्नकलसाई॥ धम्मो उ भावमंगल—मेत्तो सिद्धित्ति काऊणं॥४४॥ व्याख्या ॥ द्रव्यमिति द्रव्यमधिकृत्य । भाव इति भावमङ्गलम् । अपिशब्दान्नामस्थापने च। तत्र दव्वम्मि पुन्नकलसाइ। द्रव्यमधिकृत्य पूर्णकलशादि। आदिशब्दात्स्वस्तिकादिपरिग्रहः।धर्मस्तु।तुशब्दोऽवधारणे। धर्म एव भावमङ्गलम्।कुत एतदित्यत आह। अतोऽस्माद्धर्मात्क्षान्त्यादिलक्षणात्सिद्धिरिति कृत्वा मोक्ष इति कृत्वा भवगालनादिति गाथार्थः। अयमेव चोत्कृष्टं प्रधानं मङ्गलम् एकान्तिकत्वादात्यन्तिकत्वाच्च। न पूर्णकलशादि तस्य नैकान्तिकत्वादनात्यन्तिकत्वाच्च। सांप्रतं यथोद्देशं निर्देश इति कृत्वा हिंसाविपक्षतोऽहिंसा तां प्रतिपादयन्नाह ॥ हिंसाए पडिवक्खो, होइ अहिंसा चउव्विहा सा उ ॥ दवे भावे अ तहा, अहिंसजीवाइवाउत्ति ॥४५॥ व्याख्या ॥ तत्र प्रमत्तयोगात्प्राणव्यपरोपणं हिंसा। अस्या हिंसायाः । किम् । प्रतिकूलः पक्षः प्रतिपक्षः । अप्रमत्ततया शुभयोगपूर्वकं प्राणाव्यपरोपणमित्यर्थः । किम् । भवत्यहिंसेति । तत्र चतुर्विधा चतुःप्रकारा अहिंसा । दवे भावे अ त्ति । द्रव्यतो भावतश्चेत्येको भङ्गः । तथा द्रव्यतो नो भावतः । भावतो न द्रव्यतः। तथा न द्रव्यतो न भावत इति। तथाशब्दसमुच्चितो भङ्गत्रयोपन्यासः अनुक्तसमुच्चयार्थकत्वादस्येति। उक्तं च। तथा समुच्चयनिर्देशावधारणसादृश्यप्रेप्स्येष्वित्यादि। तथाचायं भङ्कभावार्थः। द्रव्यतो भावतश्चेति। जहा केइ पुरिसे मिअवहपरिणामपरिणए मिअं पासित्ता आयन्नाइढियकोदंडजीवे सरं णिसिरिया। से अ मिए तेण सरेण विद्धे मए। सिआ एसा दव्वओ हिंसा भावओ वि। या पुनर्द्रव्यतो न भावतः सा खल्वीर्यादिसमितस्य साधोः कारणे गच्छत इति। उक्तं च "॥ उच्चालिअम्मि पाए, इरियासमिअस्स संकमट्ठाए ॥ वावेज्जेज्ज कुलिंगी, मरिज्ज तं जोगमासज्ज ॥ १ ॥ न य तस्सिमित्तो बंधो, सुहुमो वि देसिओ समए॥ जम्हा सो अपमत्तो, साउ पमाओ त्ति नि-

१ भकारवचनेषु। इति पाठान्तरम्। २ "अणवज्जो हु पओगे, ण सव्वभावेण सो जम्हा ॥" इति पाठान्तरम्।

हिठा ॥ २ ॥ " इत्यादि।या पुनर्नावतो न ऽव्यतः सेयम् । जहा के वि पुरिसे मंद-मंदप्पगासप्पदेसे संठियं ईसिवलिअकायं रज्जुं पासित्ता एस अहि त्ति तव्वहपरिणामए णिकड्डियासिपत्ते दुअं दुअं ठिंदिया। एसा नावर्ड हिंसा न दवर्ड । चरमजङ्गस्तु शून्य इत्येवंनूताया हिंसायाः प्रतिपक्षोऽहिंसेति । एकार्थिकानिधित्सयाह । अहिंस-जीवाइवार्ड त्ति । न हिंसा अहिंसा न जीवातिपातः अजीवातिपातः । तथा च तत्त्वतः स्वकर्मातिपातो नवत्येवाजीवश्च कर्मेति नावनीयमिति । उपलक्षणत्वाच्चेह प्राणातिपातविरत्यादिग्रह इति गाथार्थः । सांप्रतं संयमव्याचिख्यासयाह ॥ पुढविदगअगणि-मारुय–वणस्सई वितिचउपणिंदिअजीवे ॥ पेहापेहपमज्जण–परिठवणमणवइकाए ॥ ४६ ॥ व्याख्या ॥ पुढवाइयाण जाव य, पंचिंदिअ संजमो नवे तेसिं ॥ संघट्टणादिण करे, तिविहेण करणजोएणं ॥ १ ॥ अजीवेहिं जेहिं, गहिएहिं असंजमो इह न-णिर्ड ॥ जह पोन्न दूसपणए, तणपणए चम्मपणए अ ॥ २ ॥ गंमी कन्नवि मुठी, संपुरु-फलए तहा ठिवाडी अ ॥ एवं पोन्नहपणयं, पसत्तं वीअराएहिं ॥३॥ बाहल्लपुहत्तेहिं, गंमीपोन्नो उ तुल्लगो दीहो ॥ कन्नवि अंते तणुर्ड मज्जे पिहुलो मुणेअव्वो ॥ ४ ॥ चउरंगुलदीहो वा, वट्टागिति मुठिपोन्नगो अहवा ॥ चउरंगुलदीहो चिअ, चउरस्सो सो उ विसेर्ड ॥ ५ ॥ संपुरुर्ड दुगमाई, फलगा वोन्नं ठिवाडिमेत्ताहे ॥ तणुपत्तो सिअरूवो, होइ ठिवाडी बुहा वेंति ॥ ६ ॥ दीहो वा हस्सो वा, जो पिहुलो होइ अप्पबाहल्लो ॥ तं मुणिअसमयसारा, ठिवाडिपोन्नं नणंतीह ॥ ७ ॥ दुविहं च दूसपणअं, समासर्ड तं पि होइ नायव्वं ॥ अप्पडिलेहियदूसं,डुप्पडिलेहं च विसेयं ॥ ८ ॥ अप्पडिलेहिअदूसे, तूली उवधाणगं च णायव्वं ॥ गंरुवधाणालिंगिणि, मसूरए चेव पोन्नगए ॥ ए ॥ पल्हविको यवि पावा–रणवतए तहय दाढगालीर्ड ॥ दुप्पडिलेहिअ दूसे, एवं वीअं नवे पणगं ॥ १० ॥ पल्हविहत्थुरणं, कोयवर्ड रूअपूरिर्ड पडिर्ड ॥ दढगालिधोइपोत्ती, सेसपसिद्धा नवे नेदा ॥ ११ ॥ तणपणगं पुण नणिअं, जिणेहिं कम्मठगंठिदहणेहिं ॥ सालीवीहीकोद्दव,–रालग रन्ने तणाइं च ॥ १२ ॥ अयएलगाविमहिसी–मियाणमजिणं च पंचमं होई ॥ नलियाखल्लगवट्टे, कोसगकित्तीयवितिएय ॥ १३ ॥ तह वि अ हिरणाई, ताई न गेण्हइ असंजमं साहू ॥ ठाणाइ जन्न एए, पेहपमधित्तु तन्न करे ॥ १४ ॥ एसो पेह उपेहा, पुणो वि दुविहा उ होइ नायव्वा ॥ वावारावावारे,वावारे जह उ गामस्स ॥ १५ ॥ एसो उविरकगोहू अवावारे जहा विणस्संतं ॥ किं एयं नु उविरकसि, दुविहा-एविन्न अहिआरो ॥ १६ ॥ वावारुविरकतर्हि, संतो नियसीसगाणचोएई ॥ चोएई इयरं पि हु, पावयणीअम्मि कयम्मि ॥१७॥ अवावारउवेरकण, विचोइए गिर्हि तु सीअंतं ॥ कम्मेसु बहुविहेसु, संजम एसो उवरकाए ॥ १८ ॥ पडिसागरिए अपमधिए, सु-

पाए सुसंजमो होइ ॥ ते चेव पमवंते, असागरिए संजमो होइ ॥ पाणाईसंसत्तं, भत्तं पाणमहवा वि अविसुद्धं ॥ उवगरणभत्तमाइ, जंवा अइरित्त होयाहि ॥१९॥ तं परिठवणविहीए, अवहट्टं संजमो भवे एसो ॥ अकुसलमणवइरोहो, कुसलाण उदीरणं चेव ॥ २० ॥ मणवइसंजम एसो, काए पुण जं अवस्सकज्जम्मि ॥ गमणागमणं भवइ, तं उवउत्तो कुणइ सम्मं ॥२३॥ तवचं कुम्मस्सव, सुसमाहियपाणिपायकायस्स ॥ हवइ य काइयसंजम, चिठंतस्सेव साहुस्स ॥ २४ ॥" उक्तः संयमः । आह । अहिंसैव तत्त्वतः संयम इति कृत्वा तद्भेदेनास्याभिधानमयुक्तम् । न, संयमस्याहिंसाया एव उपग्रहकारित्वात्संयमिन एव भावतः खल्वहिंसकत्वादिति कृतं प्रसङ्गेन । सांप्रतं तपः प्रतिपाद्यते । तच्च द्विधा । बाह्यमाभ्यन्तरं च । तत्र तावद्बाह्यप्रतिपादनायाह ॥ अणसणमूणोअरिआ, वित्तीसंखेवणं रसच्चाउ ॥ कायकिलेसो संली-णया य बज्झो तवो होई ॥ ४७ ॥ व्याख्या ॥ न अशनमनशनम् आहारत्याग इत्यर्थः । तत्पुनर्द्विधा । इत्वरं यावत्कथिकं च । तत्रेत्वरं परिमितकालं तत्पुनश्चरमतीर्थकृत्तीर्थे चतुर्थादिषण्मासान्तम् । यावत्कथिकं त्वाजन्मभावि । तत्पुनश्चेष्टाभेदोपाधिविशेषतस्त्रिधा । तद्यथा, पादपोपगमनमिङ्गितमरणं भक्तपरिज्ञा चेति । तत्रानशनिनः परित्यक्तचतुर्विधाहारस्याधिकृतचेष्टातिरेकेण चेष्टान्तरमधिकृत्यैकान्तं निःप्रतिकर्मशरीरस्य पादपस्येवोपगमनं सामीप्येन वर्तनं पादपोपगमनमिति । तच्च द्विधा । व्याघातवन्निर्व्याघातवच्च । तत्र व्याघातवन्नाम शस्तिंहाद्युपद्रवव्याघाते सति क्रियत इति । उक्तं च । "सीहादिसु अभिभूउ पादवगमणं करेइ थिरचित्तो ॥ आउम्मि पहुप्पंते, विआणिउं न वर गीअत्थो ॥" इत्यादि । निर्व्याघातं च पुनर्यत्सूत्रार्थतदुभयनिष्ठितः शिष्यान्निष्पाद्योत्सर्गतः द्वादशसमाः कृतपरिकर्मा तत्काल एव करोति । उक्तं च "॥ चत्तारि वि चित्ताइं, विगई निघूहियाइ चत्तारि ॥ संवछरे अ दोन्नि उ, एगंतरिअं च आयामं ॥ णाइविगिठो अ तवो, छम्मासपरिमिअं च आयामं ॥ अन्ने वि अ छम्मासे, होइ विगिठं तवो कम्मं ॥ वासं कोडीसहिअं आयामं काउ आणुपुव्वीए ॥ गिरिकंदरं तु गंतुं, पायवगमणं अह करेइ ॥" इत्यादि । तथा इंगिते प्रदेशे मरणमिङ्गितमरणम् । इदं च संहननापेक्षमनन्तरोदितमशक्नुवतश्चतुर्विधाहारविनिवृत्तिरूपं स्वत एवोद्वर्तनादिक्रियायुक्तस्यावगन्तव्यमिति । उक्तं च "॥ इंगिअदेसंमि सयं, चउव्विहाहारचायणिप्फन्नं ॥ उवत्तणादिजुत्तं, णाणेण उ इंगिणीमरणं "॥ इत्यादि । भक्तपरिज्ञा पुनस्त्रिविधचतुर्विधाहारविनिवृत्तिरूपा । सा नियमात्सप्रतिकर्मशरीरस्यापि धृतिसंहननवतो यथासमाधि भावतोऽवगन्तव्येति । उक्तं च "॥ भत्तपरिनाणसणं, तिउचउव्विहाहारचायनिप्फन्नं ॥ सपडिकम्मं नियमा, जहासमाहिं विणिद्दिठं ॥" इत्याद्युक्तमनशनम् । अधुना

ऊनोदरता । ऊनोदरस्य जावऊनोदरता।सा पुनर्द्विविधा ड्व्यतो जावतश्च । तत्र ड्व्यत उपकरणजक्तपानविषया । तत्रोपकरणे जिनकल्पिकादीनामन्येषां वा तदभ्यासपराणामवगन्तव्या न पुनरन्येषाम् । उपध्यजावे समग्रसंयमाजावादतिरिक्ताग्रहणतो वोनोदरतेति । उक्तं च " ॥ जं वट्टइ उवयारे, उवगरणं तं मि होइ उवगरणं ॥ अइरेगं अहिगरणं, अजयं अजर्ज परिहरंतो ॥" इत्यादि । जक्तपानोनोदरता पुनरात्मीयाहारादिमानपरित्यागवतो वेदितव्या । उक्तं च ॥ " बत्तीसं किर कवला, आहारो कुछिपूरर्ज जणिर्ज ॥ पुरिसस्स महिलिआए, अठावीसं हवे कवला ॥ कवलाण य परिमाणं, कुक्कुडिअंडयपमाणमेत्तं तु ॥ जो वा अविगिअवयणो, वयणम्मितुहेय वीसबो ॥" इत्यादि । एवं व्यवस्थिते सत्यूनोदरताल्पाहारादिजेदतः पञ्चविधा जवति । उक्तं च ॥ " अप्पाहार अवड्ढा, डुजागपत्ता तहेव किंचूणा॥ अठ डुवालस सोलस, चउवीस तहेक्कतीसा य ॥" अयमत्र जावार्थः । अल्पाहारोनोदरता नामैककवलादारज्य यावदष्टौ कवला इत्यत्र चैककवलमाना जघन्या, अष्टकवलमाना पुनरुत्कृष्टा, शेषजेदा मध्यमा च । एवं नवज्य आरज्य यावद्द्वादश कवलास्तावदपार्धोनोदरता । जघन्यादिजेदा जावनीया इति । एवं त्रयोदशज्य आरज्य यावत्षोडश तावद्द्विजागोनोदरता । एवं सप्तदशज्य आरज्य यावच्चतुर्विंशतिस्तावत्प्राप्ता । इत्थं पञ्चविंशतेरारज्य यावदेकत्रिंशत्तावत्किंचिदूनोदरता । जघन्यादिजेदाः स्वधियावसेयाः । एवमनेनानुसारेण पानेऽपि वाच्याः । एवं योषितोऽपि ड्रष्टव्या इति.। जावोनोदरता पुनः क्रोधादिपरित्याग इति । उक्तं च ॥ "कोहाईणमणुदिणं, चार्ज जिणवयणजावणार्ज अ ॥ जावेणोणोदरिआ, पणत्ता वीअरागेहिं ॥" इत्यादि । उक्तोनोदरता । इदानीं वृत्तिसंक्षेप उच्यते । स च गोचराजिग्रहरूपः । ते चानेकप्रकाराः।तद्यथा । ड्व्यतः क्षेत्रतः कालतो जावतश्च । तत्र ड्व्यतो निर्लेपादि ग्राह्यमिति । उक्तं च "॥लेवकमलेवकं वा, अमुगं दवं च अद्य पिछामि ॥ अमुगेण य दवेणं, अह दवाजिग्गहो नाम ॥ अठउ गोअरजूमी, एलुगविरकंजमित्तगहणं च ॥ सग्गामपरग्गामे, पवइएयराय खित्तम्मि ॥ उद्युध्य गंतुं पच्चा–गई अ गोमुत्तिआ पयंगविही ॥ पेडा य अऊपेडा, अप्जिंतरवाहिसंवुक्का ॥ काले अजिग्गहो पुण, आदी मज्झे तहवसाणे ॥ अप्पत्ते सइ काले, आदी विमइमप्पतइअंते ॥ दिंतगपडिछयाणं, जवेद्य सुहुमं पि माहु अवियत्तं ॥ इत्तिअपत्तअतीते, पवत्तणंमीय तो मज्झे । उक्खित्तमाइचरमा, जावजुआ खलु अजिग्गहा होंति ॥ गायंतो अ रुयंतो, जं देइ निसन्नमादी वा ॥ उसक्कण अहिसक्कण–परंमुहालंकिर्ज नरो वा वि ॥ जावणयरेण जुर्ज, अह जावाजिग्गहो णाम ॥" उक्तो वृत्तिसंक्षेपः । सांप्रतं रसपरित्याग उच्यते । तत्र रसाः क्षीरादयस्तत्परित्यागस्तप इति ।

उक्तं च ॥ विगइं विगईजीउ, विगयगयं जोउ नुंजए साहू ॥ विगई विगइसहावा, विगई विगइं बला णेइ ॥ विगई परिणइधम्मो, मोहो जमु रिज्ञए उदिसे अ ॥ सुठु-चित्तजयपरो, कहं अकजेण चिट्टिहित्ति ॥ दावानलमझगउ, को तडवसमठयाइ जल-माइ ॥ सत्ते वि ण सेविद्या, मोहाणलदीविएसुवमा॥" इत्यादि ॥ उक्तो रसपरित्यागः। सांप्रतं कायक्लेश उच्यते । स च वीरासनादिभेदाच्चित्र इति। उक्तंच "॥ वीरासणउक्कु-डुगा–सणाइ लोआइओ य विसेउ ॥ कायकिलेसो संसा–रवासनिव्वेअहेउत्ति ॥ वीरा-सणाइसु गुणा, कायनिरोहादयो अ जीवेसु ॥ परलोअगई अ तहा, बहुमाणो चेव अन्नेसिं ॥ णिस्संगया य पच्छा,पुरकम्मविवज्जणं च लोअगुणा॥ डुक्कसहत्तं नरगा–दिभा-वणाए य निव्वेओ ॥ " तथान्यैरप्युक्तम् " ॥ पश्चात्कर्म पुरःकर्म तथा ये च परिग्रहाः ॥ दोषा ह्येते परित्यक्ताः शिरोलोचं प्रकुर्वता ॥ " इत्यादि । गतः कायक्लेशः । सांप्रतं संलीनतोच्यते । इयं चेन्द्रियसंलीनतादिभेदाच्चतुर्विधेति । उक्तं च "॥इंदिअकसाय-जोए, पडुच्च संलीणया मुणेअव्वा ॥ तहय विवित्ता चरिआ, पसत्ता वीअरागेहिं ॥" तत्र श्रोत्रादिभिरिन्द्रियैः शब्दादिषु सुन्दरेतरेषु रागद्वेषापाकरणमिन्द्रियसंलीनतेति । उक्तं च "॥ सद्देसु अ भद्दयपा-वएसु सोअविसयमुवगएसु ॥ तुट्ठेण य, रुठेण य समणेण सया ण होअव्वं ॥" एवं शेषेन्द्रियेष्वपि वक्तव्यम् । यथा । "रूवेसु भद्दगपावएसु" इत्यादि । उक्तेन्द्रियसंलीणताधुना कषायसंलीनता । सा च उदयनिरोधोदीर्णविफ-लीकरणलक्षणेति । उक्तं च " ॥ उदयस्सेव निरोहो, उदयं पत्ताण वाफलीकरणं ॥ जं इत्थ कसायाणं, कसायसंलीनता एसा ॥" इत्यादि । उक्ता कषायसंलीनता सांप्रतं योगसंलीनता । सा पुनर्मनोयोगादीनामकुशलानां निरोधः कुशलानामुदीरणमित्येवं-भूतेति । उक्तं च "॥ अपसत्थाण निरोहो, जोगाणमुदीरणं च कुसलाणं ॥ कज्जम्मि यविहगमणं, जोए संलीणया भणिआ॥"इत्यादि। उक्ता योगसंलीनता । अधुना विवि-क्तचर्या सा पुनरियम् "॥ आरामुज्जाणादिसु,थीपसुपंडगविवज्जिएसु जं ठाणं ॥ फल-गाहारादीण य, गहणं तह एसणिज्जाणं ॥ " गता विविक्तचर्या। उक्ता संलीन-ता । "बझो तवो होही"इति । एतदनशनादि बाह्यं तपो भवति । लौकिकैरप्यासेव्य-मानं ज्ञायत इति कृत्वा बाह्यमित्युच्यते । विपरीतग्राहेण वा कुतीर्थिकैरपि क्रिय-त इति कृत्वा इति गाथार्थः । उक्तं बाह्यं तप इदानीमाभ्यन्तरमुच्यते । तच्च प्राय-श्चित्तादिभेदमिति । आह च ॥ पायच्छित्तं विणउ, वेआवच्चं तहेव सज्झाउ ॥ झाणं उव-सग्गो वि अ, अब्भिंतरउ तवो होइ ॥ ४८ ॥ व्याख्या ॥ तत्र पापं छिनत्तीति पापच्छित् । अथवा यथावस्थितं प्रायश्चित्तं शुद्धमस्मिन्निति प्रायश्चित्तमिति । उक्तं च ॥ "पावं छिंदइ जम्हा, पायच्छित्तं ति भन्नए तम्हा॥पाएण वा वि चित्तं, विसोहई तेण पच्छित्तं ॥"

तत्पुनरालोचनादि दशधेति । उक्तं च ॥ "आलोअणपडिकमणे, मीसविवेगे तहा वि उस्सग्गे ॥ तवछेअमूलअणव–ठया य पारंचिए चेव ॥" नावार्थोऽस्या आवश्यकविशेषविवरणादवसेय इति । उक्तं प्रायश्चित्तं सांप्रतं विनय उच्यते । तत्र विनीयतेऽनेनाष्टप्रकारं कर्मेति विनय उच्यते ॥ विनयफलं शुश्रूषा,गुरुशुश्रूषाफलं श्रुतज्ञानम् ॥ ज्ञानस्य फलं विरति–र्विरतिफलं चाश्रवनिरोधः ॥ संवरफलं तपोवल–मथ तपसो निर्जरा फलं दृष्टम् ॥ तस्मात्क्रियानिवृत्तिः, क्रियानिवृत्तेरयोगित्वम् ॥ योगनिरोधाद्भवसं–ततिक्षयः संततिक्षयान्मोक्षः ॥ तस्मात्कल्याणानां, सर्वेषां नाजनं विनयः ॥" स च ज्ञानादिनेदात्सप्तधा ॥ उक्तं च "॥ णाणे दंसणचरणे, मणवइकाउवयारिउ विणउ ॥ णाणे पंचपगारो, मइणाणाईण सद्दहणं ॥ नत्ती तह बहुमाणो, तद्दिठ्ठाण सम्मनावणया ॥ विहिगहणप्रासो वि अ, एसो विणउ जिणानिहिउ ॥ सुस्सूसणा अणासा–यणा य विणउ अ दंसणे डुविहो ॥ दंसणगुणाहिएसु, कयइ सुस्सूसणा विणउ ॥ सक्कारप्रुठाणे, सम्माणासणअनिग्गहो तहय ॥ आसणअणुप्पयाणं, किइकम्मं अंजलिगहो अ ॥ एंतस्सणुगठणया, ठिअस्स तह पज्जुवासणा नणिया ॥ गठंताणुव्वयणं एसो सुस्सूसणाविणउ ॥ इह य सक्कारो थुणणवंदणादि, अप्रुठाणं जउ दीसइ तउ चेव कायवं, संमाणो वठपत्तादीहिं पूअणं । आसणानिमुहो पुण अठंतस्सेवायरेणासणाणयणपुव्वगं उवविसेहएठति नणणं त्ति । आसणअणुप्पदाणं तु गणाउ गाणं संचारणं । किइकम्मादयो पगडठा । अणासायणाविणउ पुण पणरसविहो । तं जहा "॥ तिठगर-धम्म–आयरिअ-वायग-थेर-कुल-गणे संघे ॥ संनोइय-किरियाए मइणाणाईण य तहेव ॥" एठ नावणा तिठगराणमणासायणा य तिठगरपन्नत्तस्स धम्मस्स अणासायणा । एवं सर्वत्र ऊष्टव्यम् । "॥ कायवा पुण नत्ती, बहुमाणो तहय वणवाउ अ ॥ अरहंतमाइयाणं, केवलणाणावसाणाणं ॥" उक्तो दर्शनविनयः । सांप्रतं चारित्रविनयः "॥ सामाइयाइचरणस्स, सद्दहणं तहेव काएणं ॥ संफासणं परूवण–महपुरउ नवसत्ताणं ॥ मणवइकाइयविणउ, आयरियाईण सवकालं पि ॥ अकुसलमणाइरोहो, कुसलाणमुदीरणं तह य ॥ " इदानीमौपचारिकविनयः ॥ स च सप्तधा "॥ अप्नासठणठंदा–णुवत्तणं कयपडिकिई तह य ॥ कारियणिमित्तकरणं, डुक्खत्तगवेसणा तह य ॥ तह देसकाल जाणण, सवठेसु तह यणुमई नणिया ॥ उवआरिउ उ विणउ, एसो नणिउ समासेणं ॥" तत्र अप्नासठणं आसणठिअस्स णिच्चमेव आयरियस्स अप्नासे अदूरसामन्ते अछेअव्वं । ठंदाणुवत्तियवो कयपडिकिई णाम पसणा आयरिया सुत्तठं तङ्गयाणि दाहिंति णणाम निज्जरत्ति आहारादिणा जइयवं, कारियणिमित्तकरणं सम्ममठपदमहेया विणएण विणए विसेसेण वट्टिअव्वं तयठाणुठाणं च कायवं । सेसनेदा पसिद्धा । जिनस्य धर्मो

जिनधर्मः । विनयमूलः । उक्तं च "॥ मूलाउ खंधप्पभवो दुमस्स ॥" इत्यादि यतः "॥विणउ सासणे मूलं, विणउ निव्वाण साहगो ॥ विणयाउ विप्पमुक्कस्स,कउ धम्मो कउ तवो ॥ १ ॥ विणयाउ नाणं नाणाउ, दंसणं दंसणाउ चरणं ॥ चरणेहिंतो मुक्खो, मुक्खे सुक्खं अणावाहं ॥ २ ॥" उक्तो विनय इदानीं वैयावृत्यम् । तत्र व्यावृत्तभावो वैयावृत्यमिति । उक्तं च "॥वेआवच्चं वावरु-भावो इह धम्मसाहणणिमित्तं ॥ अन्नादियाण विहिणा,संपायणमेस भावत्थो ॥ आयरिअ उवज्झाए,थेर तवस्सी गिलाणसेहाणं ॥साहम्मियकुलगणसं–घसंगयं तमिह कायव्वं ॥" तत्थ आयरिउ पंचविहो । तं जहा पव्वावणायरिउ दिसायरियउ सुत्तस्स उद्देसणायरिउ सुत्तस्य समुद्देस्सणायरिउ वायणायरिउत्ति । उवज्झायाउ पसिद्धा चेव । थेरो नाम जो गच्छस्स संचितिं करेइ । जाइसुअपरियायइसु वा थेरो । तवस्सी नाम जो उग्गतवचरणरई । गिलाणो नाम रोगाभिभूउ । सिक्खगो णाम जो अहुणा पव्वइउ । साहम्मिउ णाम एगो पवयणउ ण लिंगउ, एगो लिंगउ ण पवयणउ, एगो लिंगउ वि पवयणउ वि, एगो ण लिंगउ ण पवयणउ । गणसंघा पसिद्धा चेव । इदानीं सज्झाउ । सो अ पंचविहो वायणा पुच्छणा परिअट्टणा अणुप्पेहा धम्मकहा । वायणा नाम सिस्सस्स अज्झावणं । पुच्छणा सुत्तस्स अत्थस्स वा हवइ । परिअट्टणा नाम परिअट्टणंति वा अब्भस्सणं ति वा गुणणं ति एगट्ठा । अणुप्पेहा नाम जो मणसा परिअट्टेइ णो वायाए । धम्मकहा णाम जो अहिंसाइलक्खणं सव्वन्नुपणीअं धम्मं अणुउगं वा कहेइ । एसा धम्मकहा । गतः स्वाध्यायः । इदानीं ध्यानमुच्यते । तत्पुनरार्तादिभेदाच्चतुर्विधम् । तद्यथा । आर्तध्यानं रौद्रध्यानं धर्मध्यानं शुक्लध्यानं चेति । तत्र "॥ राज्योपभोगशयनासनवाहनेषु,स्त्रीगन्धमाल्यमणिरत्नविभूषणेषु ॥ इच्छाभिलाषमतिमात्रमुपैति मोहात्, ध्यानं तदार्तमिति तत्प्रवदन्ति तज्ज्ञाः ॥ १ ॥ संछेदनैर्दहनभञ्जनमारणैश्च, बन्धप्रहारदमनैश्च निकृन्तनैश्च ॥ यो याति रागमुपयाति च नानुकम्पां, ध्यानं तु रौद्रमिति तत्प्रवदन्ति तज्ज्ञाः ॥२॥ सूत्रार्थसाधनमहाव्रतधारणेषु, बन्धप्रमोक्षगमनागमहेतुचिन्ता ॥ पञ्चेन्द्रियव्युपरमश्च दया च भूते, ध्यानं तु धर्ममिति तत्प्रवदन्ति तज्ज्ञाः ॥३॥ यस्येन्द्रियाणि विषयेषु पराङ्मुखानि, संकल्पकल्पनविकल्पविकारदोषैः ॥ योगैः सदा त्रिभिरहो निभृतान्तरात्मा, ध्यानोत्तमं प्रवरशुक्लमिदं वदन्ति ॥ ४ ॥ आर्तं तिर्यगितिस्तथा गतिरधो ध्याने तु रौद्रे सदा, धर्मे देवगतिः शुभं बत फलं शुक्ले तु जन्मक्षयः ॥ तस्माद्व्याधिभवान्तके हितकरे संसारनिर्वाहके, ध्याने शुक्लतरे रजःप्रमथने कुर्यात्प्रयत्नं बुधः ॥ ५ ॥" इति । उक्तं च समासतो ध्यानं विस्तरतस्तु ध्यानशतकादवसेयमिति । सांप्रतं व्युत्सर्गः । स च द्विधा । द्रव्यतो भावतश्च । द्रव्यतश्चतुर्धा । गणशरीरोपध्याहारभेदात् ।

नावतश्चित्रः क्रोधादिपरित्यागरूपत्वात्तस्येति। उक्तं च "॥ दवे अ नावे अ तहा, छुहा विसग्गो चउविहो दवे ॥ गणदेहोवहिजत्ते, नावे कोहादिचाउ त्ति ॥ काले गणदेहा- णं, अतिरित्ता सुरूजत्तपाणाणं ॥ कोहाइयाण सयं कायवो होइ चाउ त्ति ॥" उक्तो व्युत्सर्गः। अप्रितरउ तवो होइ त्ति। इदं प्रायश्चित्तादिव्युत्सर्गान्तमनुष्ठानं लौकिकै- रनभिलक्ष्यत्वात्तन्त्रान्तरीयैश्च नावतोऽनासेव्यमानत्वान्मोक्षप्राप्त्यन्तरङ्गत्वाचाभ्यन्तरं तपो नवतीति गाथार्थः। शेषपदानां प्रकटार्थत्वात्सूत्रस्पर्शिका निर्युक्तिकृता नोक्ता स्वधिया तु विजागे स्थापनीयेति। अत्राह। धर्मो मङ्गलमुत्कृष्टमित्यादौ धर्मग्रहणे सति अहिंसासंयमतपोग्रहणमयुक्तं तस्याहिंसासंयमतपोरूपत्वाव्यभिचारादिति। उच्यते। न, अहिंसादीनां धर्मकारणत्वाद्धर्मस्य च कार्यत्वात्कार्यकारणयोश्च कथं चि- द्भेदः कथंचिदभेदश्चेति। तस्य द्रव्यपर्यायोजयरूपत्वात्। उक्तं च "॥ णछिपुढवीविसिठो, घमोत्ति जं तेण जुयइ अणणो ॥ जं पुण घमुत्ति पुवं, नासी पुढवीइतो अन्नो ॥ इत्यादि। गम्यादिधर्मव्यवच्छेदेन तत्स्वरूपज्ञापनार्थं वाऽहिंसादिग्रहणमदुष्टमित्यलं विस्तरेण। आह। अहिंसासंयमतपोरूपो धर्मो मङ्गलमुत्कृष्टमित्येतद्वचः किमाज्ञासिद्धमाहोस्विद्यु- क्तिसिद्धमपि। अत्रोच्यते। उजयसिद्धं कुतो जिनवचनत्वात्तस्य च विनेयसत्वापेक्षयाज्ञा- दिसिद्धत्वात्। आह च निर्युक्तिकारः "॥ जिणवयणं सिद्धं चेव,नणइ कछइ उदाहरणं ॥ आसयउ सोयारं हेऊ वि कहिं वि नणेया ॥ ४ए ॥ व्याख्या ॥ जिनाः प्राग्निरूपितस्वरूपाः तेषां वचनं तदाज्ञया सिद्धमेव सत्यमेव प्रतिष्ठितमेव अविचार्यमेवेत्यर्थः। कुतः जि- नानां रागादिरहितत्वाद्रागादिमतश्च सत्यवचनासंनवात्। उक्तं च "॥रागाद्वा द्वेषाद्वा मोहाद्वा वाक्यमुच्यते ह्यनृतम् ॥ यस्य तु नैते दोषा–स्तस्यानृतकारणं किं स्यात् ॥" इत्यादि ॥ तथापि तथाविधश्रोत्रपेक्षया तत्रापि नणते क्वचिदुदाहरणम्। तथा आश्रित्य तु श्रोतारं हेतुरपि क्वचिद्भण्यते। नतु नियोगतः। तुशब्दः श्रोतृविशेषणार्थः। किंविशिष्टं श्रोतारम्। पटुधियं मध्यमधियं च। नतु मन्दधियम्। इति। तथाहि। पटु- धियो हेतुमात्रोपन्यासादेव प्रजूतार्थावगतिर्जवति। मध्यमधीस्तु तेनैव बोध्यते न खितर इत्यर्थः। तत्र साध्यसाधनान्वयव्यतिरेकप्रदर्शनमुदाहरणमुच्यते दृष्टान्त इत्यर्थः। साध्यधर्मान्वयव्यतिरेकलक्षणश्च हेतुः। इह च हेतुमुल्लङ्घ्य प्रथममुदाहर- ॥४५॥णं न्यायानुगतत्वात्तद्बलेनैव हेतोः साध्यार्थसाधकत्वोपपत्तेः। क्वचिद्धेतुमनभि- ५ दृष्टान्त एवोच्यत इति न्यायप्रदर्शनार्थं वा। यथा गतिपरिणामपरिणतानां गत्युपष्टम्नको धर्मास्तिकायश्चक्षुष्मतो ज्ञानस्य दीपवत्। उक्तं च। जीवानां पुजलानां च गत्युपष्टम्नकारणम् ॥ धर्मास्तिकायो ज्ञानस्य दीपश्चक्षुष्मतो ॥" तथा क्वचिद्धेतुरेव केवलोऽनिधीयते। न दृष्टान्तः। यथा मदीयोऽयमश्वो

विशिष्टचिह्नोपलब्ध्यन्यथानुपपत्तेरित्यलं प्रसङ्गेनेति गाथार्थः । तथा ॥ कत्थइ पंचावयवं, दसहा वा सव्वहा न पडिसिद्धं ॥ न य पुण सव्वं भण्णइ, हंदी सवियारमक्खायं ॥५०॥ व्याख्या ॥ श्रोतारमेवाङ्गीकृत्य क्वचित्पञ्चावयवं दशधा वेति क्वचिद्दशावयवं सर्वथा गुरुश्रोत्रपेक्षया न प्रतिषिद्धमुदाहरणाद्यभिधानमिति वाक्यशेषः । यद्यपि च न प्रतिषिद्धं तथाप्यविशेषेणैव न च पुनः सर्वं भण्यते उदाहरणादि । किमित्यत आह । हंदी सवियारमक्खायं । हंदीत्युपप्रदर्शने । किमुपप्रदर्शयति । यस्माद्विहान्यत्र च शास्त्रान्तरे सविचारं सप्रतिपक्षमाख्यातं साकल्यत उदाहरणाद्यभिधानमिति गम्यते । पञ्चावयवाश्च प्रतिज्ञादयः । यथोक्तम् । प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः । दश पुनः प्रतिज्ञाविभक्त्यादयः । वक्ष्यति च । "ते उ पइन्नविहत्ती" इत्यादि । प्रयोगांश्चैतेषां भावार्थमिहैव स्वस्थाने दर्शयिष्यामीति गाथार्थः । सांप्रतं यदुक्तं "जिणवयणं सिद्धं चेव भण्णइ कत्थइ उदाहरणं" इत्यादि तत्रोदाहरणहेत्वोः स्वरूपाभिधित्सयाह ॥ तत्थाहरणं दुविहं, चउव्विहं होइ एक्कमेक्कं तु ॥ हेऊ चउव्विहो खलु, तेण उ साहिज्जए अत्थो ॥५१॥ व्याख्या ॥ तत्रशब्दो वाक्योपन्यासार्थो निर्धारणार्थो वा । उदाहरणं पूर्ववत् । तच्च मूलभेदतो द्विविधं द्विप्रकारं चरितकल्पितभेदात् । उत्तरभेदतस्तु चतुर्विधं भवति तयोर्द्वयोरेकैकमुदाहरणमाहरणतद्देशतद्दोषोपन्यासभेदात्तच्च वक्ष्यामः । तथा हिनोति गमयति जिज्ञासितधर्मविशिष्टानर्थानिति हेतुः । स चतुर्विधश्चतुःप्रकारः । खलुशब्दो व्यक्तिभेदादनेकविधश्चेति विशेषणार्थः । तुशब्दस्य पुनःशब्दार्थत्वात्तेन पुनर्हेतुना साध्यार्थाविनाभाववलेन साध्यते निष्पाद्यते ज्ञाप्यते वार्थः प्रतिज्ञार्थ इति गाथार्थः । सांप्रतं नानादेशजविनेयगणहितायोदाहरणैकार्थिकप्रतिपिपादयिषयाह ॥ नायं आहरणं ति अ, दिट्ठंतोवमनिदरिसणं चेव ॥ एगट्ठं तं दुविहं, चउव्विहं चेव नायव्वं ॥५२॥ व्याख्या ॥ ज्ञायतेऽस्मिन् सति दार्ष्टान्तिकोऽर्थ इति ज्ञातम् । अधिकरणे निष्ठाप्रत्ययः । तथोदाह्रियते प्राबल्येन गृह्यतेऽनेन दार्ष्टान्तिकोऽर्थ इति उदाहरणम् । दृष्टमर्थमन्तं नयतीति दृष्टान्तः । अतीन्द्रियप्रमाणदृष्टं संवेदननिष्ठां नयतीत्यर्थः । उपमीयतेऽनेन दार्ष्टान्तिकोऽर्थ इत्युपमानम् । तथा च निदर्शनं निश्चयेन दर्श्यतेऽनेन दार्ष्टान्तिक एवार्थ इति निदर्शनम् । एगट्ठं ति । इदमेकार्थिकज्ञातम् । इदं च तथागुपन्यस्तं द्विविधमुदाहरणं चतुर्विधं चैवाङ्गीकृत्य ज्ञातव्यं प्रत्येकमपि । सामान्यविशेषयोः कथंचिदेकत्वादत एव सामान्यस्यापि प्राधान्यख्यापनार्थमेकवचनाभिधानम् । एकार्थमित्यत्र बहु वक्तव्यं तत्तु नोच्यते ग्रन्थविस्तरभयाद् गमनिकामात्रमेवैतदिति गाथार्थः । सांप्रतं यदुक्तं तत्रोदाहरणं द्विविधमित्यादि । तद्विविध्यादिप्रदर्शनायाह ॥ चरियं कप्पियं वा, दुविहं तत्तो चउव्विहेक्कक्कं ॥ आहारणे तद्देसे तद्दोसे चेवुवन्नासे ॥ ५३

व्याख्या ॥ चरितं च कल्पितं चेति द्विविधमुदाहरणम्। तत्र चरितमभिधीयते यद्वृत्तं तेन कस्य चिद्दार्ष्टान्तिकार्थप्रतिपत्तिर्जन्यते। तद्यथा दुःखाय निदानं यथा ब्रह्मदत्तस्य। तथा कल्पितं खवुद्धिकल्पनाशिल्पनिर्मितमुच्यते। तेन च कस्य चिद्दार्ष्टान्तिकार्थप्रतिपत्तिर्जन्यते। यथा पिप्पलपत्रैरनित्यतायामिति। उक्तं च ॥ "जह तुब्भे, तह अम्हे, तुब्भे वि अ होहिहा जहा अम्हे ॥ अप्पाहेइ पडंतं, पंडुअपत्तं किसलयाणं ॥ ण वि अत्थि ण वि अ होई, उल्लावो किसलपंडुपत्ताणं ॥ उवमा खलु एस कया, भविअजणविबोहणट्ठाए ॥" इत्यादि। आह। उदाहरणं दृष्टान्त उच्यते तस्य च साध्यानुगमादि लक्षणमिति। उक्तं च ॥ साध्येनानुगमो हेतोः साध्याभावे च नास्तिता ॥ ख्याप्यते यत्र दृष्टान्तः स साधर्म्येतरा द्विधा ॥ अस्य पुनस्तल्लक्षणाभावात्कथमुदाहरणत्वमित्यत्रोच्यते। तदपि कथंचित्साध्यानुगमादिना दार्ष्टान्तिकार्थप्रतिपत्तिजनकत्वात्फलत उदाहरणम्। इहापि च सोऽस्त्येवेति कृत्वा किं नोदाहरणतेति। साध्यानुगमादिलक्षणमपि सामान्यविशेषोभयरूपानन्तधर्मात्मके वस्तुनि सति कथंचिद्भेदवादिन एव युज्यते नान्यस्यैकान्तभेदाभेदयोस्तदभावादिति। तथाहि सर्वथा प्रतिज्ञादृष्टान्तार्थभेदवादिनोऽनुगमतः खलु घटादौ कृतकत्वादेरनित्यत्वादि प्रतिबन्धदर्शनमपि प्रकृतानुपयोग्येव भिन्नवस्तुधर्मत्वात्सामान्यस्य च परिकल्पितत्वादसत्त्वादिन्नमपि च तद्बलेन साध्यार्थप्रतिबन्धकल्पनायां सत्यामतिप्रसङ्गादित्यत्र बहु वक्तव्यं तत्तु नोच्यते ग्रन्थविस्तरभयादिति। एवं सर्वथा अभेदवादिनोऽप्येकत्वादेव तदभावो भावनीय इति। अनेकान्तवादिनस्त्वनन्तधर्मात्मके वस्तुनि तत्तद्धर्मसामर्थ्यात्तत्तद्वस्तुनः प्रतिबन्धबलेनैव तस्य वस्तुनो गमकं भवत्यन्यथा ततस्तस्मिंस्तत्प्रतिपत्त्यसंभव इति कृतं प्रसङ्गेन प्रकृतं प्रस्तुमः। चरितं कल्पितं चेत्यनेन विधिना द्विविधम्। ततः पुनश्चतुर्विधं चतुःप्रकारमेकैकम्। कथमत आह। उदाहरणं तद्देशः तद्दोषश्चैव उपन्यास इति। तत्रोदाहरणशब्दार्थ उक्त एव। तस्य देशस्तद्देश एवं तद्दोषः। उपन्यसनमुपन्यासः स च तद्वस्त्वादिलक्षणो वक्ष्यमाण इति गाथार्थः। सांप्रतमुदाहरणमभिधातुकाम आह ॥ चउहा खलु आहरणं, होइ अवाउ उवाय ठवणा य ॥ तह य पडुप्पन्नविणा–समेव पढमं चउविगप्पं ॥ ५४ ॥ व्याख्या॥ चतुर्धा खलु उदाहरणं भवति। अथवा चतुर्धा खलु उदाहरणे विचार्यमाणे भेदा भवन्ति। तद्यथा। अपायः। उपायः। स्थापना च। तथा च प्रत्युत्पन्नविनाशमेवेति। स्वरूपमेषां प्रपञ्चेन भेदतो निर्युक्तिकार एव वक्ष्यति। तथा चाह। प्रथममपायोदाहरणं चतुर्विकल्पं चतुर्भेदम्। तत्रापायश्चतुःप्रकारः। तद्यथा। द्रव्यापायः क्षेत्रापायः कालापायो भावापायश्च इति गाथार्थः। तत्र द्रव्यादपायो द्रव्यापायः। अपायोऽनिष्टप्राप्तिः।

१ "स साधर्म्येतरो द्विधा" इति पाठान्तरम्।

द्रव्यमेव वापायो द्रव्यापायः अपायहेतुत्वादित्यर्थः । एवं क्षेत्रादिष्वपि भावनीयम् । सांप्रतं द्रव्यापायप्रतिपादनायाह॥ दव्वावाए दोन्नि उ, वाणिअगा भायरो धणनिमित्तं॥ वहपरिणएक्कमेक्कं, दहंमि मच्छेण निव्वेउ ॥ ५५ ॥ व्याख्या ॥ द्रव्यापाये उदाहरणं द्वौ तु । तुशब्दादन्यानि च । वणिजौ भ्रातरौ धननिमित्तं धनार्थं वधपरिणतौ एकैक-मन्योन्यं ह्रदे मत्स्येन निर्वेद इति गाथाक्षरार्थः । भावार्थस्तु कथानकादवसेयः । तच्चेदम् । एगंमि संनिवेसे दो भायरो दरिद्दप्पाया तेहिं सोरठं गंतूण साहस्सिउ णउलउ रूवगाणं विढविउ ते अ सयं गामं संपठिया इंता तं णउलयं वारएण वहंति। जया एगस्स हत्थे तदा इयरो चिंतेइ ।"मारेमि णवरमेए रूवगा ममं होंतु"।एवं वीउ चिं-तेइ "जहाहं एअं मारेमि" । ते परोप्परं वहपरिणया अप्पवसंति । तउ जाहे सग्गा-मसमीवं पत्ता तत्थ नईतरके जिठअरस्स पुणरावत्ती जाया।"धिरत्थु ममं जेण मए दव्व-स्स कए भाउविणासो चिंतिउ"।परुणो इअरेण पुच्छिउ कहिए भणई ममंपि एयारिसं चित्तं होंतं।ताहे एअस्स दोसेणं अम्हेहिं एअं चिंतिअं ति काउं । तेहिं सो णउलउ दहे वूढो। तेअ घरं गया। सोअ णउलउ तत्थ पडंतो मच्छएण गिलिउ । सो अ मच्छो मेएण मारिउ।वीहीए उयारिउ।तेसिं च भाउगाणं भगिणी मायाए वीहिं पठविआ जहा मच्छं आणेह जं भाउगाणं सिप्पंति । ताए अ समावत्तीए सो चेव मच्छउ आ-णीउ।चेडीए फालिंतीए णउलउ दिठो।चेडीए चिंतिअं एस णउलउ मम चेव भविस्स-इ त्ति । उछंगे कउ ठविथंतो थेरीए दिठो णाउ अ। तीए भणिअं किमेअं तुमे उछंगे कयं सावि लोहं गया ण साहइ।ताउ दो वि परोप्परं पहरंतो।सा थेरी ताए चेडीए तारिसे मम्मप्पएसे आहया जेण तक्खणमेव जीवियाउ ववरोविया। तेहिं तु दारएहिं सो कलहवइअरो णाउ । स णउलउ दिठो थेरी गाढप्पहारा पाणविमुक्का णिसठं धर-णिअले पडिया दिठा चिंतिअं वणेहिं। इमो सो अवायबहुलो अठो त्ति।एवं दव्वं अवा-यहेउ त्ति । लौकिका अप्याहुः "॥ अर्थानामर्जने दुःखमर्जितानां च रक्षणे ॥ आये दुःखं व्यये दुःखं धिग् द्रव्यं दुःखवर्धनम् ॥ १ ॥ अपायबहुलं पापं ये परित्यज्य संश्रिताः ॥ तपोवनं महासत्त्वास्ते धन्यास्ते तपस्विनः ॥ २ ॥" इत्यादि । एतावदत्र-कृतोपयोगि । तउ तेसिं तमवायं पिछिऊण णिव्वेउ जाउ तउ तं दारियं कस्सइ दा-ऊण निव्विसकामभोआ पव्वइय त्ति गाथार्थः । इदानीं क्षेत्राद्यपायप्रतिपादनायाह ॥ खेत्तंमि अवक्कमणं, दसारवग्गस्स होइ अवरेणं॥ दीवायणो अ काले, भावे मंडुक्किआ खवउ ॥ ५६ ॥ व्याख्या ॥ तत्र क्षेत्र इति द्वारपरामर्शः । ततश्च क्षेत्रादपायः क्षेत्र-मेव वा कारणत्वादिति । तत्रोदाहरणमपक्रमणमपसर्पणं दशारवर्गस्य दशारसमु-दायस्य भवत्यपरेणापरत इत्यर्थः । भावार्थः कथानकादवसेयः । तच्च वक्ष्यामः । द्वैपा-

यनश्च काले । द्वैपायन ऋषिः । काल इत्यत्रापि कालादपायः कालापायः काल एव वा तत्कारणत्वादित्यत्रापि भावार्थः कथानकगम्य एव । तच्च वक्ष्यामः । भावे मंडुक्किका-क्षपक इत्यत्रापि भावादपायो भावापायः । स एव वा तत्कारणत्वादित्यत्रापि च भा-वार्थः कथानकादवसेयस्तच्च वक्ष्याम इति गाथार्थः । भावार्थ उच्यते । खित्तापाओ-दाहरणं दसारा हरिवंसरायाणो । एत्थ महई कहा जहा हरिवंसे । उवउंगियं चेव भणए। कंसंमि विणिवाइए सावायं खेत्तमेयं ति काऊण जरासंधरायभएण दसारवग्गो महुराउ अवक्कमिऊण बारवइं गउ त्ति । प्रकृतयोजनां पुनर्निर्युक्तिकार एव करि-ष्यति । किमकाण्ड एव नः प्रयासेन । कालावाए उदाहरणं पुण कण्हपुच्छिएण भगवयारिट्ठणेमिणा वागरियं बारसहिं संवच्छरेहिं दीवायणाउ बारवईणयरीविणा-सो उज्जोतनरायणगरीए परंपरएण सुणिऊण दीवायणपरिव्वायउ मा णगरिं विणा-सेहामि त्ति कालावधिमसउ गमेमि त्ति उत्तरावहं गउ । सम्मं कालमाणमयाणिऊण य बारसमे चेव संवच्छरे आगउ कुमारेहिं खलीकउ कयणिआणो देवो उववन्नो । तउ य णगरीए अवाउ जाउत्ति णयहा जिणभासियं ति । भावावाए उदाहरणं खमउ । एगो खमउ चेल्लएण समं भिक्खायरियं गउ । तेण तत्थ मंडुक्कलिया मारिआ । चिल्लएण भणियं मंडुक्कलिआ तए मारिआ । खवगो भणइ । रे दुट्ठ सेह विरमइआ चेव एसा । ते गआ। पच्छा रत्तिं आवस्सए आलोइत्ताए खमगेण सा मंडुक्कलिया नालोइया । ताहे चिल्लएण भणिअं।खमगा तं मंडुक्कलियं आलोएहिं खमउ रुट्ठो तस्स चेल्लयस्स खेल-मल्लयं घेत्तूण उट्ठाइउ अंसियालउ खंभे आवडिओ । वेगेण इंतो मउ य । जोइसिएसु उववन्नो । तउ चइत्ता दिट्ठीविसाणं कुले दिट्ठीविसो सप्पो जाउ। तत्थ एगेण परिहिं-डंतेण नगरे रायपुत्तो सप्पेण खइउ।अहितुंडएण विद्याउ सव्वे सप्पा आवाहिआ मंडले पवेसिआ भणिया ।असेसे सव्वे गच्छंतु जेण पुण रायपुत्तो खइउ सो अच्छउ ।सव्वे गया एगो ठिउ सो भणिउ अहवा विसं आवियह अहवा एत्थ अग्गिंमि णिवडाहि सो अ अगं-धणो सप्पाणं किल दो जाईओ गंधणा अगंधणा य ते अगंधणा माणिणो। ताहे सो अग्गिंमि पविट्ठो णय तेण तं वांतं पच्चाइयं।रायपुत्तो वि मउ पच्छा रन्ना रुट्ठेण घोसा-वियं रज्जे जो मम सप्पसीसं आणेइ तस्साहं दीणारं देमि । पच्छा लोगो दीणारलोभेण सप्पे मारेउं आढत्तो तं च कुलं जत्थ सो खमउ उप्पन्नो तं जाईसरं रत्तिं हिंडइ दिवसउ न हिंडइ मा जीवे दहेहामि त्ति काउं । अण्णया आहिंडिगेहिं सप्पे मग्गं-तेहिं रत्तिचरेण परिमलेण तस्स खमगसप्पस्स विलं दिट्ठं ति । दारे से ठिउ उसहिउ ।६२ चिंतेइ । दिट्ठो मे कोवस्स विवाउ तो जइ अहं अभिमुहो णिग्गच्छामि दहिहामि ताहे पुच्छेण आढत्तो निप्फिडिउं जत्तियं निप्फेडेहि । तावइयमेव

आहिंडिउं विंदेइ । जाव सीसं ठिसं मउं य सो सप्पो देवयापरिग्गहिउं । देवयाए रणो सुमिणए दरिसणं दिसं । जहा मा सप्पे मारेह पुत्तो ते नागकुलाउं उवट्ठिऊण जविस्सइ । तस्स दारयस्स नागदत्तनामं करेद्याहि । सो अ खमगसप्पो मरित्ता तेण पाणपरिच्चाएण तस्सेव रणो पुत्तो जाउं जाए दारए णामं कयं णागदत्तो। खुड्डलउं चेव सो पव्वइउं।सो अ किर तेण तिरियाणुजावेण अतीव बुहालुउं दोसीणवेलाए चेव आढवेइ ज्ञुंजिउं जाव सूरत्थमणवेलं । उवसंतो धम्मसद्धिउं य तम्मि अ गठे चत्तारि खमगा तं चाउम्मासिउं तेमासिउं दोमासिउं एगमासिउं त्ति । रत्तिं च देवया वंदिउं आगया । चाउम्मासिउं पढमठिउं । तस्स पुरउं तेमासिउं । तस्स पुरउं दोमासिउं । तस्स पुरउं एगमासिउं । ताण य पुरउं खुड्डउं । सव्वे खमगे अतिक्कमित्ता ताए देवयाए खुड्डउं वंदिउं । पठा ते खमगा रुठा । निग्गछंती अ गहिया चाउंमासिअखमएण पोत्ते जणिआ य अणेण । कडपूयणि अम्हे तवस्सिणो ण वंदसि । एयं कूरजायणं वंदसि त्ति सा देवया जणई । अहं जावखमयं वंदामि । ण पूआसक्कारपरे माणिणो अ वंदामि । पठा ते चेल्लयं तेण अमरिसं वहंति।देवया चिंतेई मा एए चेल्लयं खरंटेहिंति तो सणिहिआ चेव अठामि । ताहे पडिवोहेहामि । वितिअदिवसे अ चेल्लउं संदिसावेऊण गउं । दोसीणस्स पडिआगउं आलोइत्ता चाउम्मासियखमगं णिमंतेई । तेण पडिग्गहे से खेलं निबूढं । चेल्लउं जणई । मिठा मि डुक्कडं जं तुम्हे मए खेलमल्लउं ण पणामिउं तं तेण उप्पराउचेव फेडित्ता खेलमल्लए बूढं । एवं जाव तिमासएणं जाव एगमासिएणं णिबूढं । तं तेण तहा चेव फेडिअं अडुयालित्तालंवणे गिह्लामि त्ति काउं खमएण चेल्लउं वाहं गहिउं । तं तेण तस्स चेल्लगस्स अदीणमणसस्स विसुद्धपरिणामस्स लेस्साहिं विसुज्ऊमाणीहिं तदावरणिज्जाणं कम्माणं खएण केवलनाणं समुप्पणं । ताहे सा देवया जणई । किह तुम्हे वंदिअव्वा जेणेवं कोहाजिजूआ अठह । ताहे ते खमगा संवेगमावणा मिठामि डुक्कडं ति । अहो वालो उवसंतचित्तो अम्हेहिं पावकम्मेहिं आसाइउं एवं तेसिं पि सुहज्ऊवसाणेणं केवलनाणं समुप्पणं । एवं पसंगउं कहिअं कहाणयं । उवणउं पुण कोहादिगाउं अपसत्थजावाउं डुग्गईए अवाउं त्ति । परलोकचिन्तायां प्रकृतोपयोगितां दर्शयन्नाह ॥ सिक्खगअसिक्खगाणं, संवेगथिरठ्याइ दोह्नं पि ॥ दव्वाइ्या एवं, दंसिज्जंते अवायाउं ॥ ५७ ॥ व्याख्या ॥ शिक्षकाशिक्षकयोः अजिनवप्रव्रजितचिरप्रव्रजितयोः अजिनवप्रव्रजितगृहस्थयोर्वा । संवेगस्थैर्यार्थं द्वयोरपि द्रव्याद्या एवमुक्तेन प्रकारेण वक्ष्यमाणेन वा दर्श्यन्ते अपाया इति । तत्र संवेगो मोक्षसुखाजिलाषः । स्थैर्यं पुनरज्युपग-

१ "तत्र वराणिणो" इति पाठान्तरम् ।

तापरित्यागः । ततश्च कथं नु नाम दुःखनिबन्धनद्रव्याद्यवगमात्तयोः संवेगस्थैर्ये स्यातां द्रव्यादिषु चाप्रतिबन्ध इति गाथार्थः । तथा चाह ॥ दविअं कारणगहिअं, विगिंचिअव्वमसिवाइ खेत्तं च ॥ बारसहिं एस कालो, कोहाइविवेगभावम्मि ॥ ५८ ॥ व्याख्या ॥ इहोत्सर्गतो मुमुक्षुणा द्रव्यमेवाधिकं वस्त्रपात्राद्यन्यद्वा कनकादि न ग्राह्यं शिष्यकाहिसंदष्टादिकारणगृहीतमपि तत्परिसमाप्तौ परित्याज्यमत एवाह । द्रव्यं कारणगृहीतं किं विकिंचितव्यं परित्याज्यमनेकैहिकामुष्मिकापायहेतुत्वात् । दुरन्ताभद्राद्यपायहेतुत्वाद्दुरन्ताभद्राद्यपायहेतुता च मध्यस्थैः स्वधिया भावनीयेति । एवमशिवादिक्षेत्रं च परित्याज्यमिति वर्तते। अशिवादिप्रधानं क्षेत्रं अशिवादिक्षेत्रम् । आदिशब्दान्नूनोदरताराजद्विष्टादिपरिग्रहः । परित्याज्यं चेदमनेकैहिकामुष्मिकापायसंभवादिति। तथा द्वादशभिर्वर्षैरेष्यत्कालः परित्याज्य इति वर्तते। तत एवापायसंभवादिति भावना । एतदुक्तं भवत्यशिवादिदुष्ट एष्यत्कालः द्वादशभिर्वर्षैरनागतमेवोज्झितव्य इति। उक्तं च॥ संवच्छरबारसएण,होहित्ति असिवं ति ते तओ णिंति,सुत्तत्थं कुव्वंता॥ अतिसयमाईहिं नाऊणमित्यादि । तथा क्रोधादिविवेकाभाव इति। क्रोधादयोऽप्रशस्तभावास्तेषां विवेकः नरकपातनाद्यपायहेतुत्वात्परित्यागः । भाव इति भावापाये कार्य इत्ययं गाथार्थः । एवं तावद्वस्तुतश्चरणकरणानुयोगमधिकृत्यापायः प्रदर्शितः । सांप्रतं द्रव्यानुयोगमधिकृत्य प्रदर्श्यते ॥ दव्वादिएहिं निच्चो,एगंतेणेव जेसिं अप्पा उ॥ होइ अभावो तेसिं, सुहदुहसंसारमोक्खाणं ॥ ५९ ॥ व्याख्या॥ द्रव्यादिभिः द्रव्यक्षेत्रकालभावैर्नारकत्वविशिष्टक्षेत्रवयोऽवस्थितत्वाप्रसन्नत्वादिभिर्नित्योऽविचलितस्वभावः । एकान्तेनैव सर्वथैव येषां वादिनामात्मा जीवः तुशब्दादन्यच्च वस्तु भवति संजायते अभावोऽसंभवस्तेषां वादिनाम् । केषाम् । सुखदुःखसंसारमोक्षाणाम् । तत्राह्लादानुभवलक्षणं सुखम् । तापानुभवरूपं दुःखम् । तिर्यग्नरनारकामरभवसंसरणरूपः संसारः । अष्टप्रकारकर्मबन्धवियोगो मोक्षः । तत्र कथं पुनस्तेषां वादिनां सुखाद्यभावः । आत्मनोऽप्रच्युतानुत्पन्नस्थिरैकस्वभावत्वादन्यथा चापरिणतेः । सदैव नारकत्वादिभावादपरित्यागाप्रसन्नत्वे पूर्वरूपस्य च प्रसन्नत्वेनाभवनादेवं शेषेष्वपि भावनीयमिति गाथार्थः । तदर्थेयम् ॥ सुहदुक्खसंपओगो, न विज्जई निच्चवायपक्खंमि ॥ एगंतुच्छेयंमि अ, सुहदुक्खविगप्पणमजुत्तं ॥ ६० ॥ व्याख्या ॥ सुखदुःखसंप्रयोगः । सम्यक् संगतो वा प्रयोगः संप्रयोगः अकल्पित इत्यर्थः । न विद्यते नास्ति न घटत इत्यर्थः । क नित्यवादपक्षे नित्यवादाभ्युपगमे संप्रयोगो न विद्यते । कल्पितस्तु भवत्येव । यथाहुर्नित्यवादिनः । प्रकृत्युपधानतः पुरुषस्य सुखदुःखे स्तः । स्फटिके रक्तादिवद्बुद्धिप्रतिबिम्बाद्वान्य इति । कल्पितत्वं चास्य आत्मनस्तत्त्वत एव तथा परिणतिमन्तरेण सु-

लावसावाद्रुपधानसन्निधावप्यन्यथोपलं रक्ततादिवत्तदभ्युपगमे चाभ्युपगमक्षतिः । बुद्धिप्रतिबिम्बपक्षेऽप्यविचलितस्यात्मनः सदैवैकस्वभावत्वात् । सदैवैकरूपप्रतिबिम्बापत्तेः । स्वभावभेदाभ्युपगमे चानित्यत्वप्रसङ्ग इति । माभूदनित्यैकान्तग्रह इत्यत आह । एकान्तेन सर्वथा तत्स्वाभाव्येन छेदो विनाशः एकान्तोच्छेदः । निरन्वयो नाश इत्यर्थः । अस्मिंश्च किं सुखदुःखयोर्विकल्पनं सुखदुःखविकल्पनमयुक्तमघटमानकम् । अयमत्र भावार्थः । एकान्तोच्छेदेऽपि सुखाद्यनुभवितुस्तत्क्षण एव सर्वथोच्छेदादहेतुकत्वात्तदुत्तरक्षणस्योत्पत्तिरपि न युज्यते । कुतः पुनस्तद्विकल्पनमिति गाथार्थः । उक्तोऽपायः । सांप्रतमुपाय उच्यते तत्रोप सामीप्येन विवक्षितवस्तुनोऽविकललाभहेतुत्वाद्वस्तुनो लाभ एवोपायः । अभिलषितवस्त्ववाप्तये व्यापारविशेष इत्यर्थः । असावपि चतुर्विध एव । तथा चाह ॥ एमेव चउविगप्पो, होइ उवाओ वि तह दव्वंमि ॥ धाउव्वाओ पढमो, नंगलकुलिएहिं खेत्तं तु ॥ ६१ ॥ व्याख्या ॥ एवमेव यथा अपायः । किं । चतुर्विकल्पश्चतुर्भेदः भवत्युपायोऽपि तद्यथा द्रव्योपायः क्षेत्रोपायः कालोपायः भावोपायश्च । तत्र द्रव्य इति द्वारपरामर्शः । द्रव्योपाये विचार्ये धातुवादः सुवर्णपातनोत्कर्षलक्षणो द्रव्योपायः प्रथम इति लौकिके । लोकोत्तरे त्वध्वादौ पटलादिप्रयोगतः प्रासुकोदककरणम् । क्षेत्रोपायस्तु लाङ्गलादिना क्षेत्रोपक्रमणे भवति । अत एवाह । लाङ्गलकुलिकाभ्यां क्षेत्रं चोपक्रम्यत इति गम्यते । ततश्च लाङ्गलकुलिके तदुपायो लौकिकः । लोकोत्तरस्तु विधिना प्रातरशनाद्यर्थमटनादिना क्षेत्रभावनम् । अन्ये तु योनिप्राभृतप्रयोगतः काञ्चनपातनोत्कर्षलक्षणमेव संघप्रयोजनादौ द्रव्योपायं व्याचक्षते । विद्यादिभिश्च दुस्तराध्वतरणलक्षणं क्षेत्रोपायमित्यत्र च प्रथमग्रहणपदार्थोऽतिरिच्यमान इवाभाति । पाठान्तरं वा धाउव्वाओ भणिओ त्ति । अत्र च कथंचिदविरोध एवेति गाथार्थः ॥ कालो अ नालियाईहिं, होइ भावंमि पंडिओ अभओ ॥ चोरस्स कए नट्टिं, वड्ढकुमारिं परिकहेइ ॥ ६२ ॥ व्याख्या ॥ कालश्च नालिकादिभिर्ज्ञायत इति शेषः । नालिका घटिका आदिशब्दाच्छङ्क्वादिपरिग्रहः । ततश्च नालिकादयः कालोपायो लौकिकः । लोकोत्तरस्तु सूत्रपरावर्तनादिभिस्तथा भवति । भावे चेति द्वारपरामर्शस्त्वाद्भावोपाये विचार्ये निदर्शनं क इत्याह । पण्डितो विद्वान् भयोऽभयकुमारस्तथाचाह । चोरनिमित्तं नर्तकीं वड्ढकुमारीं । किम् । त्रिकालगोचरसूत्रप्रदर्शनार्थमाह परिकथयति । ततश्च यथा तेनोपायतश्चौरभावो विज्ञातः । एवं शिक्षकादीनां तेन तेन विधिनोपायत एव भावो ज्ञातव्य इति गाथार्थः । नवरं भावोवाए उदाहरणं । रायगिहं णाम णयरं तत्थ सेणिओ राया सो भणाए भणिओ जहा मम एगखंभं पासायं करेहि । तेण वड्ढइणो आणत्ता गया कट्ठछिंदगा तेहिं

अडवीए सलखणो सरलो महइ महालओ डुमो दिठ्ठो। धूवो दिणो जेण स परिग्गहिओ रुक्खो सो दरिसावेउ अप्पाणं तो णं ण छिंदामो त्ति अह ण देइ दरिसावं तो छिंदामो त्ति। ताहे रुक्खवासिणा वाणमंतरेण अन्नयस्स दरिसावो दिणो। अहं रणो एगखंनं पासायं करेमि। सव्वोउयं च आरामं करेमि सव्ववणजाइउवेयं मा छिंदहत्ति। एवं तेण कओ पासाओ। अन्नया एगाए मायंगीए अकाले अंबयाण दोहलो। सा नत्तारं नणइ मम अंबयाणि आणेहि। तदा अकालो अंबयाणं तेण ओणामणीए विद्याए मालं ओणामियं अंबयाणि गहिआणि। पुणो अ उणमणीए उणामियं। पनाए रन्ना दिठ्ठं। पयं ण दीसइ। को एस मणुसो अतिगओ जस्स एसा एरसी सत्ति त्ति। सो मम अंतेउरं पि धरिसेहि त्ति काउं अन्नयं सद्दावेऊण नणइ। सत्तरत्तस्स अप्नंतरे जइ चोरं णाणेसि तो णहि ते जीविअं। ताहे अनओ गवेसिउं आढत्तो। ण वरं एगंमि पएसे गोज्जो रमिउकामो मिलिओ लोगो। तव गंतुं अनओ नणति। जाव गोज्जो मंडेइ अप्पाणं ताव ममेगं अक्खाणगं सुणेह। जहा एगंमि णयरे एगो दरिद्दसिठ्ठी परिवसति। तस्स धूया वहुकुमारी अईव रूविणी य वरणिमित्तं कामदेवं अच्चेइ। सा य एगंमि आरामे चोरिय पुप्फाणि उचंती आरामिएण दिठ्ठा कयछिउमाढत्ता। तीए सो नणिओ। मा मइ कुमारिं विणासेहिं। तवावि नयणी नावणिज्जीओ अछि। तेण नणिआ एक्काए ववछाए मुयामि जइ ण वरं जम्मि दिवसे परिणवसि तद्दिवसं चेव नत्तारेण अणुग्घाडिया समाणी मम सयासं एहिसि तो मुयामि। तीए नणिओ। एवं हवउ त्ति। तेण विसज्जिआ। अन्नया परिणीआ जाहे अपवरकं पवेसिआ ताहे नत्तारस्स सप्नावं कहेइ। विसज्जिआ वच्चइ। पठिया आरामं। अंतरा अ चोरेहिं गहिया। तेसिंपि सप्नावो कहिओ मुक्का। गछंतीए अंतरा रक्खसो दिठ्ठो जो छण्हं मासाणं आहारेइ तेण गहिया कहिए मुक्का गया आरामियसगासं तेण दिठ्ठा सो संनंतो नणइ। कहमागयासि। ताए नणिअं मया कओ सो पुव्विं समओ। सो नणइ। कहं नत्तारेण मुक्का ताहे तस्स तं सवं कहिअं अहो सच्चपइन्ना एसा महिलत्ति। एतिएहिं मुक्का किहाहं डुहामि त्ति। तेण विमुक्का पडियंती अ गया सवेसिं तेसिं मप्रेणं। आगता तेहिं सवेहिं मुक्का। नत्तारसगासं अणहसमग्गा गया। ताहे अनओ तं जणं पुच्छइ। अक्खह एथ केण डुक्करं कयं। ताहे इस्सालुया नणंति नत्तारेणं। छुहालुया नणंति रक्खसेणं। पारदारिया नणंति मालागारेणं। हरिएसेण नणिअं चोरेहिं। पछा सो गहिओ। जहा एस चोरो त्ति। एतावत्प्रकृतोपयोगि। जहा अन्नतस्स चोरस्स उवाएण नावो णाओ एवमिह वि सेहाणमुवछायं तयाणं उवाएण गीअछेण विपरिणामा दणा नावो जाणिअव्वो त्ति। किं एए पद्मावणिज्जा न वत्ति।

पन्नाविएसु वि तेसु मुंकावणाइसु एसेव विन्नासा य। तदुक्तम्। पन्नाविउं सि एत्तिअ मुंकावेउं न कप्पइ इत्यादि। कहाणयसंहारो पुण चोरो सेणिअस्स उवणीउं। पुच्छिएण सप्नावो कहिउं। ताहे रन्ना जणियं। जइ नवरं एयाउं विद्याउं देहि तो न मारेमि। देमि त्ति अप्नुवगए आसणे ठिउं पढइ। न ठाइ। राया जणइ किं न ठाइ। ताहे मायंगो जणइ जहा अविणएणं पढसि। अहं नूमीए तुमं आसणे णीयतरे उवविठो। ठिया तो सिद्धाउ य विज्जाउ त्ति। कृतं प्रसङ्गेन। एवं तावल्लौकिकमर्थाधिकृतं चरणकरणानुयोगं चाधिकृत्योक्ता द्रव्योपायादयः। सांप्रतं द्रव्यानुयोगमधिकृत्य प्रदर्श्यन्त इति। तत्राप्युपायदर्शनतो नित्यानित्यैकान्तवादयोः सुखादिव्यवहाराजावप्रसङ्गेन तथा प्रत्यक्षगोचरातिक्रान्तेश्च वस्तुत आत्माजाव एवेति मा नूच्छिष्यकाणां मतिविभ्रमोऽत उपायत एवात्मास्तित्वमजिधातुकाम आह॥ एवं तु इहं आया, पच्चक्खं अणुवलप्नमाणो वि। सुहडुक्खमाइएहिं, गिप्नइ हेऊहिं अत्थि त्ति॥६३॥ व्याख्या॥ एवमेव यथा धातुवादादिजिर्द्रव्यादि। इहास्मिँल्लोके आत्मा जीवः। प्रत्यक्षमिति तृतीयार्थे द्वितीया। प्रत्यक्षेण अनुपलज्यमानोऽपि अदृश्यमानोऽपि सुखडुःखादिजिरादिशब्दात्संसारपरिग्रहो गृह्यते। हेतुजिर्युक्तिजिः। अस्ति विद्यत इत्येवं गृह्यते। तथाहि सुखडुःखानां धर्मत्वाद्धर्मस्य चावश्यमनुरूपेण धर्मिणा जवितव्यं नच नूतसमुदायमात्र एव देहोऽस्यानुरूपो धर्मी तस्याचेतनत्वात्सुखादीनां च चेतनत्वादित्यत्र बहु वक्तव्यमिति गाथार्थः॥ जह वस्साउ हत्थिं, गामा नगरं तु पाउसा सरयं॥ उदइयाउ उवसमं, संकंती देवदत्तस्स॥६४॥ व्याख्या॥ यथा चेति प्रकारान्तरदर्शने। अश्वाद्धोटकात् हस्तिनं गजं ग्रामान्नगरं तु प्रावृषः शरदं प्रावट्कालाछरत्कालमित्यर्थः। औदयिकाद् जावादुपशममित्यौपशमिकं संक्रान्तिः। संक्रमणं संक्रान्तिः। कस्य। देवदत्तस्य प्रत्यक्षेणेति शेषः॥ एवं सउ जीवस्स वि, दवाईसंकमं पडुच्चा उ॥ अत्थित्तं साहिद्यइ, पच्चक्खेणं परोक्खे वि॥६५॥ व्याख्या॥ एवं यथा देवदत्तस्य तथा किं सतो विद्यमानस्य जीवस्यापि द्रव्यादिषु संक्रमः। आदिशब्दात्क्षेत्रकालजावपरिग्रहः। तं प्रतीत्य आश्रित्य अस्तित्वं विद्यमानत्वं साध्यते अवस्थाप्यते। आह। सतोऽस्तित्वसाधनमयुक्तम्। न। अव्युत्पन्नविप्रतिपन्नविषयत्वात् साधनस्य। प्रत्यक्षेणाश्वादिसंक्रमेण सर्वथा साक्षात् परिच्छित्तिमङ्गीकृत्य परोक्षमप्यप्रत्यक्षमपि अवग्रहादिस्वसंवेदनतो देशतस्तु प्रत्यक्षमेवैतत्। एतडुक्तं जवति यथा अश्वादिसंक्रान्तिर्न देवदत्ताख्यं धर्मिणमतिरिच्य वर्तते एवमियमप्यौदारिकाद्वैक्रिये तिर्यग्लोकादूर्ध्वलोके परिमितवर्षायुष्कपर्यायादपरिमितवर्षायुष्कपर्याये चारित्रजावादविरतजावे च संक्रान्तिर्न जीवाख्यं धर्मिणमन्तरेणोपपद्यत इति वृद्धा व्याचक्षते। अन्ये तु द्वितीयगाथापश्चार्द्धं पाठान्तरतोऽन्यथा व्याचक्षते। तत्रायमजि-

संन्वधः। एवं तु इदं आयेत्यादिगाथयोपायन [illegible]
सुखदुःखादिजावसंगतिनिमित्तं नित्यानित्यैकान्त[illegible]
जिधित्सुराह । जह वस्साउं गाया । व्याख्या [illegible] ॥ [illegible]
संकमं पडुच्चा उ॥ परिणामो [illegible] [illegible]
जावना पुनरियम्। नह्येकान्तनित्यानित्यपक्षयोर्दृष्टानि [illegible]
ते। इत्यतस्तज्ञावान्यथानुपपत्त्यैव परिणामसिद्धिरिति। उक्तं च ॥ [illegible]
त्सर्वैयेव [illegible]चागमः ॥ परिणामः प्रमासिद्ध इष्टश्च [illegible] ॥ [illegible]
नाशोत्पादस्थितिष्वयम् ॥ शोकप्रमोदमाध्यस्थं जनो याति सहेतुकम् ॥
दध्यत्ति न पयोऽत्ति दधिव्रतः ॥ अगोरसव्रतो नोजे तस्माद्वस्तु त्रयात्मकम् ॥
द्वयार्थः। उक्तमुपायद्वारमधुना स्थापनाद्वारमजिधित्सुराह ॥ [illegible]
तह पोंमरीअं तु ॥ अहवा विसन्नदफण, हिंगुसिवकयं उदाहरणं ॥ ६६ ॥ [illegible]
इति स्थापना तया तस्यास्तस्यां वा कर्म सम्यगजीष्टार्थप्ररूपणालक्षणा क्रिया
नाकर्म। एकमिति तज्जात्यपेक्षया दृष्टान्तो निदर्शनं तत्र स्थापनाकर्मणि [illegible]
शब्दात्तथाजूतमन्यच्च। तथाच पोण्डरीकाध्ययने पोण्डरीकं प्ररूप्य [illegible]
रासेन स्वमतमवस्थापितमिति । अथवेत्यादि पश्चार्धं सुगमम्। लौकिकं [illegible]
थाक्षरार्थः । जावार्थस्तु कथानकादवसेयः । तच्चेदम् । जहा एगंमि णगरे [illegible]
लायारो सखाइउं करंडे पुप्फे घेत्तूण वीहीए एइ । सो अन्न अयइउं ताहे
सिग्घं वोसिरिऊणं सा पुप्फपिडिगा तस्सेव उवरि पल्हत्थिया । ताहे लोउं
मेयं। जेणिह पुप्फाणि ठक्केसि त्ति । ताहे सो जणइ । अहं अलोविउं एत्र
नामं। एतं तं वाणमंतरं हिंगुसिवं नाम उप्पन्नं। लोएण परिग्गहियं। पूया से
खाइगयं अद्य वि तं पाडलिपुत्ते हिंगुसिवं नाम वाणमंतरं। एवं जइ किं वि उड्डाह
यणीयं कयं होद्या केण वि पमाएण ताहे तहा पञ्च एयव्वं जहा पञ्चुणं [illegible]
हवइ। संजाए उड्डाहे जह गिरिसिद्धेहिं कुसलबुद्धीहिं लोयस्स धम्मसद्धा [illegible]
सेण सुठु कया ॥ एवं तावच्चरणकरणानुयोगं लोकं चाधिकृत्य स्थापनाकर्म प्र[illegible]
तमधुना द्रव्यानुयोगमधिकृत्योपदर्शयन्नाह ॥ सवजिचारं हेउं, सहसा वोत्तुं तमे[illegible]
वेहिं ॥ उववूहइ सप्पसरं, सामछं चप्पणो नाउं ॥ ६७ ॥ द्वारं ॥ व्याख्या ॥ सह
चारेण वर्तत इति सव्यजिचारस्तं हेतुं साध्यधर्मान्वयादिलक्षणं सहसा [illegible]
वोत्तुमजिधाय तमेव हेतुमन्यैर्हेतुजिरेव उपबृंहते समर्थयति। सप्रसरमनेकधा
रयन् सामर्थ्यं प्रज्ञाबलम्। चशब्दो जिन्नक्रमः। आत्मनश्च स्वस्य च ज्ञात्वा
चशब्दात्परस्य चेति गाथार्थः। जावार्थस्त्वयम्। [illegible]

प्रमाणे छे के:—पूर्वे पांचमा अध्ययनमां साधुए निर्दोष आहार लेवो एम कह्युं. हवे ते आहार जे संयमवंत होय तेज लहे, माटे छठा अध्ययनमां अढार स्थानकरूप संयमनो आचार कहेछे. हवे ते पूर्वोक्त अध्ययनमां निर्दोष आहारने अर्थे साधु गोचरीये गयो होय तिहां राजा विगेरे पूछे के, हे साधो! तमारो आचार केवो छे. त्यारे ते कहे, जो साधुनो आचार सांभलवानो तमारो भाव होय, तो उद्यानमां आचार्य समोसस्या छे. तिहां जइ साधुनो आचार पूछो. ते सर्व कहेशे. ते आचार्य केवा छे ते कहे छे. ( नाण के० ) ज्ञान ते श्रुतज्ञानादिक ( दंसण के० ) दर्शन ते सम्यक्त्व श्रद्धारूप, तेणे करी (संपन्नं के०)संपन्नं एटले सहित (संजमेणके०) संयमे एटले सत्तरभेद संयमनेविषे तथा ( तवे के० )तपसि एटले बारभेदवाला तपने विषे (रयं के०) रतं एटले रक्त एवा अने (आगमसंपन्नं के०) आगमसंपन्नं एटले आगम जे सिद्धांत तेवडे संपूर्ण भरेला अर्थात् द्वादशांगीना जाणनार एवा(उज्जाणम्मि के०) उद्याने एटले ग्रामानुग्राम ते एक गामथी बीजे गाम एम अनुक्रमे विहार करता थका उद्यानने विषे (समोसढं के०) समवसृतं एटले समोसस्या एवा आचार्य प्रत्ये राजादिक लोको पूछे.॥ १ ॥ (रायाणो के०) राजानः एटले राजाउ (य के०) च एटले वली ( रायमच्चा के० ) राजामात्याः एटले राजाउना अमात्य जे मंत्रीउ ( माहणा के० ) ब्राह्मणाः एटले ब्राह्मणो (अडुव के०) अथवा (खत्तिआ के०) क्षत्रियाः एटले जातिवंत सूर्यवंशी प्रमुख क्षत्रियो ते (निहुअप्पाणो के० ) निभृतात्मानः एटले असंभ्रांत थका निश्चल मनथी हाथ जोडीने ( पुच्छंति के० ) पृछंति एटले पूछे. शुं पूछे तो के, हे भगवन्! ( भे के० ) भवतां एटले तमारो ( आयारगोअरो के० ) आचारगोचरः एटले जे क्रियाकलापनो आश्रय करी तमे रहेला छो ते क्रियाकलाप ( कहं के० ) कथं एटले केवी रीते छे ते कहो. ॥ २ ॥

---

( दीपिका. ) व्याख्यातं पिंडैषणाध्ययनमधुना महाचारकथाख्यमध्ययनमारभ्यते । अस्य चाध्ययनस्यायमभिसंबन्धः । इह इतः पूर्वाध्ययने साधोर्भिक्षाविशुद्धिरुक्ता । इह तु गोचरप्रविष्टेन सता स्वस्य आचारं पृष्टेन आचारज्ञेनापि महाजनसमक्षं तत्रैव स्थाने विस्तरतो न कथयितव्यम् । अपितूपाश्रये गुरवः कथयिष्यन्तीति वक्तव्यम् । इत्येतदुच्यते। इत्यनेन संबन्धेन आयातमिदमध्ययनमिति । तथाहि गाथात्रयेणोक्तिमेलनम् । राजानो नरपतयः, राजामात्याश्च मंत्रिणः, ब्राह्मणाः प्रसिद्धाः, अथवेति तथा क्षत्रियाः श्रेष्ठ्यादयः, साधुं प्रतीति पृच्छन्ति । इतीति किम् । कथं भे भवतामाचारगोचरः क्रियाकलापः । यं प्रति त्वं स्थितोऽसि । किंभूता राजादयः । निभृता-

रमानोऽसंभ्रान्ता धर्मावसर इति द्वितीयगाथाया व्याख्यानम् । किंभूतं साधुम् । नाणदंसणसंपन्नं । ज्ञानं श्रुतज्ञानादि, दर्शनं च क्षायोपशमिकादि ताभ्यां संपन्नं संयुक्तं । पुनः किंभूतं साधुं । संयमे पञ्चानामाश्रवाणां विरमणादौ तपसि च अनशनादौ रतमासक्तम् । पुनः किंभूतं साधुम् । उद्याने क्वचित्साधूनामुपभोगयोग्यस्थाने समवसृतं स्थितं धर्मदेशनार्थं वा प्रवृत्तमिति प्रथम गाथार्थः ॥ १ ॥ २ ॥

---

( टीका. ) अधुना महाचारकथाख्यमारभ्यते। अस्य चायमभिसंबन्धः । इहानन्तराध्ययने साधोर्भिक्षाविशुद्धिरुक्ता । इह तु गोचरप्रविष्टेन सता स्वाचारं पृष्टेन तद्विदापि न महाजनसमक्षं तत्रैव विस्तरतः कथयितव्य इत्यपि त्वालये गुरवो वा कथयिष्यन्तीति वक्तव्यमित्येतदुच्यते । उक्तं च ॥ गोअरग्गपविठ्ठो उ, न निसीएज्ज कच्छए॥ कहं च न पबंधेज्जा, चिठित्ता ण व संजए ॥१॥ इत्यनेनाभिसंबन्धेनायातमिदमध्ययनम् । अस्य चानुयोगद्वारोपन्यासः पूर्ववत्तावद्यावन्नामनिष्पन्नो निक्षेपः । तत्र च महाचारकथेति नाम । एतच्च तत्त्वतः प्राग्निरूपितमेवेत्यतिदिशन्नाह ॥ जो पुव्विं उद्दिठ्ठो, आयारो सो अहीणमइरित्तो ॥ सच्चेव य होइ कहा, आयारकहाए महईए ॥ व्याख्या ॥ यः पूर्वं क्षुल्लकाचारकथायां निर्दिष्ट उक्त आचारो ज्ञानाचारादिः । असावहीनातिरिक्तो वक्तव्यः । सैव च भवति कथा आक्षेपण्यादिलक्षणा वक्तव्या । यस्मात्तदेव क्षुल्लकप्रतिपक्षोक्तं महत्कथ्यम् । आचारकथायां महत्यां प्रस्तुतायामिति गाथार्थः । उक्तो नामनिष्पन्नो निक्षेप इत्यादि चर्चः पूर्ववत्तावद्यावत्सूत्रानुगमेऽस्खलितादिगुणोपेतं सूत्रमुच्चारणीयम् । तच्चेदं नाणदंसणमित्यादि । अस्य व्याख्या । ज्ञानदर्शनसंपन्नम् । ज्ञानं श्रुतज्ञानादि, दर्शनं क्षायोपशमिकादि, ताभ्यां संपन्नं युक्तं संयमे पञ्चाश्रवविरमणादौ तपसि चानशनादौ रतमासक्तं गणोऽस्यास्तीति गणी तं गणिनमाचार्यमागमसंपन्नं विशिष्टश्रुतधरम् । बह्वागमत्वेन प्राधान्यख्यापनार्थमेतत् । उद्याने क्वचित्साधुप्रायोग्ये समवसृतं स्थितं धर्मदेशनार्थं वा प्रवृत्तमिति सूत्रार्थः ॥ १ ॥ तमित्यादि । रायाणो त्ति सूत्रम् । राजानो नरपतयः । राजामात्याश्च मन्त्रिणः । ब्राह्मणाः प्रतीताः । तथैव क्षत्रियाः श्रेष्ठ्यादयः पृच्छन्ति निभृता असंभ्रान्ता रचिताञ्जलयः कथं भे भवतामाचारः क्रियाकलापः स्थित इति सूत्रार्थः ॥ २ ॥

तेसिं सो निहुओ दंतो, सव्वभूअसुहावहो ॥
सिक्खाए सुसमाउत्तो, आयक्खइ विअक्खणो ॥ ३ ॥

---

( अवचूरिः ) तेभ्यो राजादिभ्योऽसौ गणी निभृतोऽसंभ्रान्तो दान्त इन्द्रियनो

इन्द्रियदमाभ्यां सर्वप्राणिगणहितः शिक्षया ग्रहणासेवनरूपया सुसमायुक्त आख्याति कथयति विचक्षणः ॥ ३ ॥

( अर्थ. ) (निहुर्ड के० ) निभृतः एटले असंभ्रांत एवा तथा ( दंतो के० ) दान्तः एटले इंद्रियनो इंद्रियने जीतनार एवा तथा ( सवभूअसुहावहो के० ) सर्वभूतसुखावहः एटले सर्व प्राणियोना हितकारी एवा तथा ( सिरकाए ) शिक्षया एटले ग्रहणासेवनरूप शिक्षा वडे करी ( सुसमाउत्तो के० ) सुसमायुक्तः एटले युक्त एवा तथा ( विअरकणो के० ) विचक्षणः एटले पंडित एवा ( सो के० ) सः एटले ते आचार्य जे ते ( तेसिं के० ) तेभ्यः एटले ते राजादिक लोको प्रत्ये ( आयरकइ के० ) आख्याति एटले कथन करे, प्रश्ननो उत्तर कहे. ॥ ३ ॥

( दीपिका. ) अथ स साधूराजादिभ्यः पृच्छकेभ्यः किं वदेदित्याह । स गणी साधुः तेभ्यो राजादिभ्य आख्याति कथयति । किं० साधुः। निभृतोऽसंभ्रांत उचितधर्मकथास्थित्या। किंभूतः साधुः। दान्त इंद्रियनोइंद्रियदमनेन। पुनः किंभूतः साधुः। सर्वभूतसुखावहः सर्वप्राणिहित इत्यर्थः। पुनः किंभूतः साधुः। शिक्षया ग्रहणासेवनारूपया सुष्ठु भव्यरीत्या समायुक्तः। पुनः किंभूतः साधुः। विचक्षणः पण्डित इति गाथात्रयार्थः॥३॥

( टीका. ) तेसिं ति सूत्रम्। तेभ्यो राजादिभ्योऽसौ गणी निभृतोऽसंभ्रान्त उचितधर्मकायस्थित्या। दान्त इन्द्रियनोइन्द्रियाभ्याम्। सर्वभूतसुखावहः सर्वप्राणिहित इत्यर्थः। शिक्षया ग्रहणासेवनरूपया सुसमायुक्तः सुष्ठु एकीभावेन युक्तः। आख्याति कथयति। विचक्षणः पण्डित इति सूत्रार्थः ॥ ३ ॥

हंदि धम्मत्थकामाणं, निग्गंथाणं सुणेह मे ॥
आयारगोअरं भीमं, सयलं डुरहिट्ठिअं ॥ ४ ॥

( अवचूरिः ) तमेनं धर्मार्थकामानां मुमुक्षूणां निर्ग्रन्थानां बाह्यान्तरग्रन्थिरहितानां शृणुत मम समीपादाचारगोचरं क्रियाकलापं भीमं कर्मशत्रुत्वापेक्षया सकलं डुरधिष्ठं डुराराध्यम् ॥ ४ ॥

( अर्थ. ) आचार्य शुं कहे ठे ( हंदि के० ) संबोधने हे राजादिको ! तमे ( धम्मत्थकामाणं के० ) धर्मार्थकामानाम् एटले धर्म जे श्रुतधर्म तेज ठे प्रयोजन जेमनुं एवा ( निग्गंथाणं के०) निर्ग्रंथानां एटले बाह्याभ्यंतर ग्रंथिरहित एवा साधुर्डनो (भीमं के०) भीमं एटले कर्म शत्रुप्रत्ये भयंकर अर्थात् कर्मरूप अरिने नाश करनार अने (डुरहिट्ठियं के०) डुरधिष्ठितं एटले संपूर्ण क्षुद्र जीवोने डुराश्रय एवो अर्थात् कायर पुरुषोने पालता

दोहिलो एवो ( आयारगोअरं के० ) आचारगोचरं एटले क्रियाकलाप जे तेने (मे के० ) मम सकाशात् एटले मारायकी ( सुणेह के० ) शृणुत एटले सांभलो. ॥ ४ ॥

( दीपिका. ) किं वदेदित्याह । हंदीत्युपप्रदर्शने । हे राजादयः यूयं धर्मार्थकामानामाचारगोचरं क्रियाकलापं मत्समीपाच्छृणुत इत्युक्तिः । धर्मश्चारित्रधर्मादिस्तस्य अर्थः प्रयोजनं मोक्षः तं कामयन्ते वांछन्ति विशुद्धविहितानुष्ठानकरणेनेति धर्मार्थकामा मुमुक्षवस्तेषाम् । किंभूतानां धर्मार्थकामानाम् । निर्ग्रन्थानां बाह्याभ्यन्तरग्रन्थिरहितानाम् । किंभूतमाचारगोचरं । भीमं कर्मशत्रूणामपेक्षया रौद्रम् । पुनः किंभूतमाचारगोचरम् । सकलं संपूर्णं दुरधिष्ठितं क्षुद्रसत्त्वैर्दुराश्रयमिति ॥ ४ ॥

( टीका. ) हंदि त्ति सूत्रम् । हंदीत्युपप्रदर्शने । तमेनम् । धर्मार्थकामानामिति । धर्मश्चारित्रादिस्तस्यार्थः प्रयोजनं मोक्षस्तं कामयन्तीच्छन्तीति विशुद्धविहितानुष्ठानकरणेनेति धमार्थकामा मुमुक्षवस्तेषां निर्ग्रन्थानां बाह्याभ्यन्तरग्रन्थरहितानां शृणुत मम समीपादाचारगोचरं क्रियाकलापं भीमं कर्मशत्रुवपेक्षया रौद्रं सकलं संपूर्णं दुरधिष्ठं क्षुद्रसत्त्वैर्दुराश्रयमिति सूत्रार्थः ॥ ४ ॥

नन्नछ एरिसं वुत्तं, जं लोए परमदुच्चरं ॥
विउलट्ठाणभाइस्स, न भूअं न भविस्सइ ॥ ५ ॥

(अवचूरिः) यस्तु यल्लोके प्राणिलोके परमदुश्चरमत्यन्तदुःकरं विपुलं मोक्षहेतुत्वात् संयमस्थानं तद्भजनशीलस्य तस्य न भूतं न भविष्यत्यन्यत्र जिनमतादिति ॥ ५ ॥

( अर्थ. ) हवे पाछली गायाउंमां निर्ग्रंथोना आचारनुं जे कथन तेनो उपन्यास कर्यो छे, तो हवे आ गाथाए करी ते आचार गोचरनुं अर्थ थकी गौरव कहे छे. हे राजादिको ( अन्नछ के० ) अन्यत्र एटले जिनमत शिवायना कापिलादिक मतोने विषे कोइ ठेकाणे पण आ प्रकारनो शुद्ध आचार ( न एरिसं वुत्तं के० ) नेदृशमुक्तं एटले एवो कह्यो नथी. वली ( लोए के० ) लोके एटले सामान्य लोकने विषे ( परमदुच्चरं के० ) परमदुष्करं एटले जेनुं पालवुं घणुं कठिन छे एवो ते आचारगोचर छे. तेथीज ( विउलट्ठाणभाइस्स के० ) विपुलस्थानभाजः एटले मोक्षना हेतुरूप एवा संयमस्थानने भजनारा साधुउंने पूर्वे ( न भूअं के०) न भूतं एटले तेवुं बीजुं कंइ थयुं नथी, तथा ( न भविस्सइ के० ) न भविष्यति एटले तेवुं बीजुं थनार पण नहीं. तेम उपलक्षणथी वर्त्तमान काले पण तेवुं बीजुं नथी. ॥ ५ ॥

(दीपिका.) इह अनंतरसूत्रे निर्ग्रन्थानामाचारगोचरस्य यत्कथनं तस्योपन्यासः

कृतः। अथ तस्यैवार्थतो गुरुतामाह । जो राजादयः जिनमतादन्यत्र कपिलादिमत ईदृशं यत् पूर्वमुक्तं आचारगोचरं वस्तु यल्लोके प्राणिलोके परमदुश्चरमत्यन्तदुष्करं वस्तु। विपुलस्थानजाजिनः कोऽर्थः। विपुलस्थानं विपुलमोक्षहेतुत्वात् संयमस्थानं तद्भजते सेवत इत्येवंशीलः विपुलस्थानभाजी तस्य विपुलस्थानभाजिनः साधोः न नूनं न जविष्यति ॥ ५ ॥

---

( टीका. ) धर्मार्थकामानित्युक्तम् । तदेतत्सूत्रस्पर्शनिर्युक्त्या निरूपयति । तत्र धर्मनिक्षेपो यथा प्रथमाध्ययने । नवरं लोकोत्तरमाह ॥ धम्मो बावीसविहो, अगारधम्मोणगारधम्मो अ ॥ पढमो अ बारसविहो, दसहा पुण बीयउ होइ ॥ १२ ॥व्याख्या॥ धर्मो द्वाविंशतिविधः सामान्येन द्वाविंशतिप्रकारः। अगारधर्मो गृहस्थधर्मः। अनगारधर्मश्च साधुधर्मः । प्रथमश्चागारधर्मो द्वादशविधः । दशधा पुनर्द्वितीयोऽनगारधर्मो जवतीति गाथासमासार्थः॥१२॥व्यासार्थं चाह ॥ पंचय अणुवयाइं गुणव्वयाइं च होंति तिन्नेव॥ सिक्खावयाइं चउरो, गिहिधम्मो बारसविहो अ ॥ १३ ॥ व्याख्या ॥ पंचाणुव्रतानि स्थूलप्राणातिपातविरत्यादीनि गुणव्रतानि च जवन्ति त्रीण्येव दिग्व्रतादीनि । शिक्षापदानि चत्वारि सामायिकादीनि । गृहिधर्मो द्वादशविधस्तु एष एवाणुव्रतादिः । अणुव्रतादिस्वरूपं चावश्यके चर्चितत्वान्नोक्तमिति गाथार्थः ॥ १३ ॥ साधुधर्ममाह । खंती अ मद्दवज्जव, मुत्ती तवसंजमे अ बोधव्वे॥सच्चं सोचं आकिं–चणं च बंभं च जइधम्मो॥१४॥व्याख्या॥क्षान्तिश्च मार्दवम् आर्जवं मुक्तिः तपःसंयमौ च बोद्धव्यौ सत्यं शौचमाकिंचन्यं ब्रह्मचर्यं च यतिधर्म इति गाथाक्षरार्थः । जावार्थः पुनर्यथा प्रथमाध्ययने॥१४॥धम्मो एसुवइठो, अठस्स चउव्विहो उ निक्खेवो॥उहेण छव्विहठो, चउसठिविहो विज्ञागेणं ॥ १५॥ व्याख्या॥ धर्म एष उपदिष्टो व्याख्यातः ।अधुनात्वर्थावसरस्तत्रेदमाह । अर्थस्य चतुर्विधस्तु निक्षेपो नामादिजेदात् । तत्रौघेन सामान्यतः षड्विधोऽर्थ आगमनोआगमव्यतिरिक्तो द्रव्यार्थः । चतुःषष्टिविधो विजागेन विशेषेणेति गाथासमुदायार्थः ॥ १५ ॥ अवयवार्थं त्वाह ॥ धन्नाणि रयणथावर, दुपयचउप्पय तहेव कुविअं च ॥ उहेण छव्विहठो, एसो धीरेहिं पन्नत्तो॥ १६॥व्याख्या॥धान्यानि यवादीनि, रत्नं सुवर्णं,स्थावरं जूमिगृहादि, द्विपदं गन्त्र्यादि, चतुष्पदं गवादि, तथैव कुप्यं च ताम्रकलशाद्यनेकविधम् । उघेन षड्विधोऽर्थ एषोऽनन्तरोदितः धीरैस्तीर्थंकरगणधरैः प्रज्ञप्तः प्ररूपित इतिगाथार्थः ॥१६॥ एनमेव विजागतोऽजिधित्सुराह ॥ चउवीसा चउवीसा, तिगदुगदसहा अणेगविह एव॥सव्वेसिं पि इमेसिं,विज्ञागमहयं पवरकामि॥१७॥व्याख्या चतुर्विंशति चतुर्विंशतीति चतुर्विंशतिविधो धान्यार्थो रत्नार्थश्च। त्रिद्विदशधेति। त्रिविधः

स्थावरार्थः। द्विविधो द्विपदार्थः। दशविधश्चतुष्पदार्थः। अनेकविध एवेत्यनेकविधः कुप्यार्थः। सर्वेषामप्यमीषां चतुर्विंशत्यादिसंख्याभिहितानां धान्यादीनां विभागं विशेषमथानन्तरं संप्रवक्ष्यामीत्यर्थः॥ १७॥ धन्नाइं चउवीसं, जवगोहुमसालिवीहि-सट्ठीश्रा॥ कोद्दवश्रणुया कंगू, रालग तिल मुग्गं मासा य॥ १८॥ श्रयसिहरिमिंथति-उडग–निप्फावसिलिंद रायमासा श्र॥ इक्खूमसूर तुवरी, कुलत्थ तह धन्नगकलाया॥१९॥ व्याख्या॥ धान्यानि चतुर्विंशतिः। यवगोधूमशालिव्रीहिषष्टिकाः। कोद्रवाणुकाः। कंगुरालकतिलमुद्गमाषाश्च। श्रतसीहरिमन्थत्रिपुटकनिष्पावसिलिन्दराजमाषाश्च। इक्षुमसूरतुवर्यः। कुलत्था धान्यककलायाश्चेति। एतानि प्रायो लौकिकसिद्धान्येव। नवरं षष्टिकाः शालिभेदाः। कङ्गुदकङ्गुः। तद्भेदो रालकः। हरिमन्थाः कृष्णचणकाः। निष्पावा वल्लाः। राजमाषाश्चवलकाः। शिलिन्दा मकुष्ठाः। धान्यकं कुस्तुंबरी। कलायका वृत्तचणका इति गाथात्रयार्थः॥ १८॥ १९॥ उक्तो धान्यविभागः। अधुना रत्नविभागमाह॥ रयणाणि चउवीसं, सुवन्नतउतंबरययलोहाइं॥ सीसगहिरन्नपासा– णवइरमणिमोत्तिश्रपवालं॥ ॥२०॥ संखो तिणिसा गुरु–चंदणाणि वत्थामिलाणि कट्ठाणि॥ तह चम्मदंतवाला। गंधा दव्वोसहाइं च॥ २१॥ व्याख्या॥ रत्नानि चतुर्विंशतिः। सुवर्णत्रपुताम्ररजतलोहानि। सीसकहिरण्यपाषाणवज्रमणिमौक्तिकप्रवालानि। शङ्खतिनिशागरुचन्दनानि। वस्त्रामिलानि काष्ठानि। तथा चर्मदन्तवाला गन्धाः। द्रव्यौषधानि च। एतान्यपि प्रायो लोकप्रसिद्धान्येव। नवरं रजतं रूप्यम्। हिरण्यं रूपकादि। पाषाणा विजातिरत्नानि। मणयो जात्यानि। तिनिशो वृक्षविशेषः। अमिलानि ऊर्णावस्त्राणि। काष्ठानि श्रीपर्ण्यादिफलकादीनि। चर्माणि सिंहादीनाम्। दन्ता गजादीनाम्। वालाश्चमर्यादीनाम्। द्रव्यौषधानि पिप्पल्यादीनीति गाथाद्वयार्थः॥ २०॥ २१॥ उक्तो रत्नविभागः। स्थावरादिविभागमाह॥ भूमी घरा य तरुगण, तिविहं पुण थावरं मुणेयव्वं॥ चक्कारबद्धमाणुस, तिविहं पुण होइ दुपयं तु॥ २२॥ व्याख्या॥ भूमिर्गृहाणि तरुगणाश्च। चशब्दस्य व्यवहित उपन्यासः। त्रिविधं पुनः पुनः स्थावरं मन्तव्यम्। पुनः शब्दो विशेषणार्थः। किं विशिनष्टि। स्वगतान् भेदान्। तद्यथा। भूमिः क्षेत्रम्। तच्च त्रिधा। सेतु केतु सेतुकेतु च। गृहाणि प्रासादाः। तेऽपि त्रिविधाः खातोच्छ्रितोभयरूपाः। तरुगणा नालिकेर्यारामा इति। चक्रारबद्धमानुषमिति। चक्रारबद्धं गन्त्र्यादि। मानुषं दासादि। एवं द्विपदं पुनर्भवति त्रिविधमिति गाथार्थः॥२२॥ उक्तं स्थावरादि। चतुष्पदमाह॥ गावी महिसी उट्टा, श्रयएलगश्रासश्रासतरगा य। घोडग गद्दह हत्थी, चउप्पयं होइ दसहा उ॥२३॥ व्याख्या॥ गौर्महिषी उष्ट्री श्रजा एडका

अश्वा अश्वतराश्च घोटका गर्दभा हस्तिनश्चतुष्पदं भवति दशधा तु । एते गवादयः प्रतीता एव । नवरमश्वा बाल्हीकादिदेशोत्पन्ना जात्याः । अश्वतरा वेगसरा अजात्या घोटका इति गाथार्थः ॥ २३ ॥ उक्तं चतुष्पदं कुप्यमाह ॥ नाणाविहोवगरणं, णेगविहं कुप्पलक्खणं होइ ॥ एसो अत्थो भणिओ, छव्विह चउसट्ठिभेओ उ ॥२४॥ व्याख्या ॥ नानाविधोपकरणं ताम्रकलशकडिल्लादिजातितः अनेकविधं व्यक्तितः कुप्यलक्षणं भवति । एषोऽनन्तरोदितोऽर्थो भणित उक्तः षड्विधः । चतुःषष्टिभेदस्तु उभयविभागाभ्यां प्रकृतोपयोगो द्रव्यार्थ इति गाथार्थः ॥ २४ ॥ उक्तोऽर्थः सांप्रतं काममाह ॥ कामो चउवीसविहो, संपत्तो खलु तहा असंपत्तो ॥ संपत्तो चउदसहा, दसहा पुण होअसंपत्तो ॥२५॥ व्याख्या ॥ कामश्चतुर्विंशतिविधः । ओघतः संप्राप्तः खलु तथा असंप्राप्तो वक्ष्यमाणस्वरूपः । संप्राप्तश्चतुर्दशधा चतुर्दशप्रकारः । दशधा पुनर्भवत्यसंप्राप्त इति गाथासमासार्थः । व्यासार्थं त्वाह । तत्राप्यल्पतरवक्तव्यत्वादसंप्राप्तमाह ॥ तत्थ असंपत्तोत्थो, चिंता तह सद्ध संसरणमेव ॥ विक्कवय लज्ज नासो पमाय उम्माय तब्भावो ॥२६॥ व्याख्या ॥ तत्रासंप्राप्तोऽयं कामः । अर्थेति । अर्थनमर्थः । अदृष्टेऽपि वलयादौ श्रुत्वा तदभिप्रायमात्रमित्यर्थः । तत्रैवाहो रूपादिगुणा इत्यभिनिवेशेन चिन्तनं चिन्ता । तथा श्रद्धा तत्संगमाभिलाषः । संस्मरणमेव संकल्पिकतद्रूपस्यालेख्यादिदर्शनम् । वियोगतो वा पुनःपुनरतिविक्लवता तच्छोकातिरेकेणाहारादिष्वपि निरपेक्षता । लज्जानाशो गुर्वादिसमक्षमपि तद्गुणोत्कीर्तनम् । प्रमादस्तदर्थमेव सर्वारम्भेष्वपि प्रवर्तनम् । उन्मादो नष्टचित्ततया आलजालभाषणम् । तद्भावना स्तम्भादीनामपि तद्बुद्ध्यालिङ्गनादिचेष्टेति गाथार्थः ॥२६॥ मरणं च होइ दसमो, संपत्तं पिअ समासओ वोच्छं ॥ दिट्ठीए संपाओ, दिट्ठीसेवा य संभासो ॥ २७ ॥ व्याख्या ॥ मरणं च शोकाद्यतिरेकेण क्रमेण भवति दशमः असंप्राप्तकामभेदः । संप्राप्तमपि च कामं समासतो वक्ष्य इति । तत्र दृष्टेः पुनः संपातः स्त्रीणां कुचाद्यवलोकनम् । दृष्टिसेवा च भावसारं तद्दृष्टेर्दृष्टिमेलनम् । संभाषणमुचितकाले स्मरकथाभिर्जल्प इति गाथार्थः ॥२७॥ हसिअललिअउवगूहिअ, दंतनहनिवायचुंबणं होइ ॥ आलिंगणमासेवण, करणमणंगस्स किड्डा अ ॥२८॥ व्याख्या ॥ हसितं वक्रोक्तिगर्भं प्रतीतम् । ललितं पाशकादिक्रीडा । उपगूहितं परिष्वक्तम् । दन्तनिपातो दशनच्छेद्यविधिः । नखनिपातो नखरदनजातिः । चुम्बनं चेवेति चुम्बनविकल्पः । आलिङ्गनमीषत्स्पर्शनम् । आदानं कुचादिग्रहणम् । करसेवणं ति प्राकृतशैल्या करणासेवने । तत्र करणं नाम नागरकादि प्रारंभयन्त्रम् । आसेवनं मैथुनक्रिया । अनंगक्रीडा चास्यादावर्थक्रियेति गाथार्थः ॥ २८ ॥ उक्तः कामः । सांप्रतं धर्मादीनामेव संपन्नतासंपन्नते अभिधित्सुराह ॥ धम्मो अत्थो कामो, भिन्ने ते पिंडिया पडिसवत्ता ॥ जिणवयणं उत्तिन्ना, असवत्ता होंति नायव्वा ॥ २९ ॥ व्याख्या ॥ धर्मोऽर्थः

कामः त्रय एते पिण्डिता युगपत्संपातेन प्रतिसपत्नाः परस्परविरोधिनः लोके कुप्रवचनेषु च । यथोक्तम् । अर्थस्य मूलं निकृतिः क्षमा च, कामस्य वित्तं च वपुर्वयश्च ॥ धर्मस्य दानं च दया दमश्च, मोक्षस्य सर्वोपरमः क्रियासु ॥ १ ॥ इत्यादि । एते च परस्परविरोधिनोऽपि सन्तो जिनप्रवचनमवतीर्णाः । ततः कुशलाशययोगतो व्यवहारेण धर्मादितत्त्वस्वरूपतो वा निश्चयेन असपत्नाः परस्पराविरोधिनो भवन्ति ज्ञातव्या इति गाथार्थः ॥२९॥ तत्र व्यवहारेणाविरोधमाह ॥ जिणवयणंमि परिणए, अवत्थविहियाणुठाणर्ठ धम्मो ॥ सच्छासयप्पयोगा, अत्थो वीसंजर्ठ कामो ॥ ३० ॥ व्याख्या ॥ जिनवचने यथावत्परिणते सति अवस्थोचितविहितानुष्ठानात् स्वयोग्यतामपेक्ष्य दर्शनादिश्रावकप्रतिमाङ्गीकरणे निरतिचारस्तत्पालनाद्भवति धर्मः । स्वच्छाशयप्रयोगाद्विशिष्टलोकतः पुण्यबलाच्चार्थः । विश्रम्भत उचितकलत्राङ्गीकरणतापेक्षो विश्रम्भेण काम इति गाथार्थः ॥ ३० ॥ अधुना निश्चयेनाविरोधमाह । धम्मस्स फलं मोक्खो, सासयमउलं सिवं अणाबाहं ॥ तमभिप्पेया साहू, तम्हा धम्मत्थकाम त्ति ॥ ३१ ॥ व्याख्या ॥ धर्मस्य निरतिचारस्य फलं मोक्षो निर्वाणम् । किंविशिष्टमित्याह । शाश्वतं नित्यमतुलमनन्यतुलं शिवं पवित्रमनाबाधं बाधावर्जितमेतदेवार्थः । तं धर्मार्थं मोक्षमभिप्रेतं कामयन्ति साधवो यस्मात्तस्माद्धर्मार्थकामा इति गाथार्थः ॥ ३१ ॥ एतदेव दृढयन्नाह ॥ परलोगु मुत्तिमग्गो, नथि हु मोक्खो त्ति विंति अविहिन्नू ॥ सो अथि अवितहो जिण- मयंमि पवरो न अन्नत्थ ॥३२॥ व्याख्या ॥ परलोको जन्मान्तरलक्षणो मुक्तिमार्गो ज्ञानदर्शनचारित्राणि नास्त्येव मोक्षः सर्वकर्मक्षयलक्षण इत्येवं ब्रुवते अविधिज्ञा न्यायमार्गाप्रवेदिनः । अत्रोत्तरम् । स परलोकादिः अस्त्येवावितथः सत्यो जिनमते वीतरागवचने प्रवरः पूर्वापराविरोधेन नान्यत्रैकान्तनित्यादौ हिंसादिविरोधादिति गाथार्थः ॥३२॥ व्याख्याता काचित्सूत्रस्पर्शनिर्युक्तिः । अधुना सूत्रान्तरावसरः । अस्य चायमभिसंबन्धः । इहानन्तरसूत्रे निर्ग्रन्थानामाचारगोचरकथनोपन्यासः कृतः । सांप्रतमस्यैवार्थस्य गुरुतामाह । णन्नत्ति सूत्रम् । नान्यत्र कपिलादिमते ईदृशमुक्तमाचारगोचरं वस्तु यल्लोके प्राणिलोके परमदुश्चरमत्यन्तदुष्करमित्यर्थः । ईदृशं च विपुलस्थानभाजिनः विपुलस्थानं विपुलमोक्षहेतुत्वात् संयमस्थानं तद्भजते सेवते नान्यस्य च भूतं न भविष्यति अन्यत्र जिनमतादिति सूत्रार्थः ॥ ५ ॥

सखुड्डगविअत्ताणं, वाहिआणं च जे गुणा ॥

अखंडफुडिआ कायवा, तं सुणेह जहा तहा ॥ ६ ॥

( अवचूरिः ) एतदेव जावयन्नाह। सह क्षुल्लकैर्द्रव्यजाववालैर्वर्त्तन्ते ये व्यक्ता द्रव्यजाववृद्धास्तेषां सक्षुल्लकव्यक्तानां सवालवृद्धानां व्याधिमतां चाव्याधिमतां च ये गुणा वक्ष्यमाणलक्षणास्तेऽखंडास्फुटिताः कर्तव्याः । अखण्डा देशविराधनापरित्यागेन अस्फुटिताः सर्वविराधनापरित्यागेन। तच्छृणुत यथा कर्तव्यास्तथा ॥ ६ ॥

( अर्थ. ) हवे सहुने पूर्वोक्त धर्म सरखो पालवो ते कहे छे. (सखुड्डगविअत्ताणं के०) सक्षुल्लकव्यक्तानां एटले द्रव्यजावे करी वाल ते क्षुल्लक कहियें, अने द्रव्यजावथी जे वृद्ध तेने वृद्ध कहियें. ते वालक सहित वृद्धोना तथा (वाहिआणं के०) व्याधितानां एटले व्याधिवालाउंना तथा (च के०) वली व्याधिरहितलोकोना (जे गुणा के०) ये गुणाः एटले जे गुणो छे ते (अखंडफुडिआ के०) अखंडास्फुटिताः एटले देशखंडना अने सर्वखंडना वडे रहित एवा (कायवा के० )कर्त्तव्याः एटले करवा. ते गुणो(जहातहा के०) यथा तथा एटले जेवा छे तेवा कहुं छुं.ते ( सुणेह के० ) शृणुत एटले सांजलो. ॥ ६ ॥

( दीपिका. ) पुनः एतदेव जावयन्नाह। सक्षुल्लकव्यक्तानां ये गुणा वक्ष्यमाणलक्षणास्ते अखण्डास्फुटिताः कर्तव्याः । कोऽर्थः । सह क्षुल्लकैर्द्रव्यजाववालैर्ये वर्त्तन्ते ते सक्षुल्लकाः व्यक्ताश्च द्रव्यजाववृद्धाः तेषां सक्षुल्लकव्यक्तानां सवालवृद्धानामित्यर्थः। किंभूतानां सक्षुल्लकव्यक्तानां व्याधिमतां च शब्दादव्याधिमतां च सरोगाणामरोगाणां चेति जावः। किंभूता गुणाः अखण्डास्फुटिताः अखण्डा देशविराधनापरित्यागेन अस्फुटिताश्च सर्वविराधनात्यागेन। तत् शृणुत यथा कर्तव्यास्तथेति ॥६॥

( टीका. ) एतदेव संजावयन्नाह । सखुड्डुत्ति सूत्रम् । सह क्षुल्लकैर्द्रव्यजाववालैर्ये वर्त्तन्ते ते व्यक्ता द्रव्यजाववृद्धास्तेषां सक्षुल्लकव्यक्तानां सवालवृद्धानामित्यर्थः । व्याधिमतां चशब्दादव्याधिमतां च सरुजानां नीरुजानां चेति जावः । ये गुणा वक्ष्यमाणलक्षणास्तेऽखण्डास्फुटिताः कर्तव्याः । अखण्डा देशविराधनापरित्यागेन अस्फुटिताः सर्वविराधनापरित्यागेन तत् शृणुत यथा कर्तव्यास्तथेति सूत्रार्थः ॥ ६ ॥

दस अठ य ठाणाइं, जाइं वालो वरज्झइ ॥
तठ अन्नयरे ठाणे, निग्गंथत्ताउ नस्सइ ॥ ७ ॥

( अवचूरिः ) तेचाऽगुणत्यागेनाऽखण्डिता अस्फुटिता जवन्तीत्यगुणास्तावडुच्यन्ते। दशाष्टौ स्थानानि यान्याश्रित्य वालोऽपराध्यति तत्सेवनयापराधमाप्नोति। तत्रान्यतरे स्थाने वर्तमानः प्रमादेन नैर्ग्रन्थ्याद्भ्रश्यति ॥ ७ ॥

( अर्थ. ) हवे ते पूर्वोक्त गुणो अवगुणना त्यागथी अखंड अस्फुटित थाय छे. अने

तेम थवाथी देशविराधना तथा सर्वविराधनारहित थाय ठे, ते माटे प्रथम अवगुणो कहेठे. ( जाइं के० ) यानि एटले जे ( दस अठय ठाणाइं के० ) दशाष्टकस्थानानि एटले दस अने आठ मली अढार स्थानकोने आश्रय करीने (वालो के०) बालः एटले बालक ( अवरज्झई के० ) अपराध्यति एटले अपराध करे ठे. ते केवी रीते अपराध करे ठे तो के, ( तठ के० ) तत्र एटले ते अढार स्तानकमाहेलुं ( अन्नयरे ठाणे के० )अन्यतरस्मिन् स्थाने एटले हर कोइ एक स्थानकनेविषे प्रमादथी जे वर्त्ते, ते ( निग्गंथत्ताउ के० ) निर्ग्रंथत्वतः एटले निर्ग्रंथ पणा थकी ( नस्सइ के० ) भ्रश्यति एटले भ्रष्ट थाय ठे, एटले साधुनां व्रत भांगे ठे.॥ ७ ॥

( दीपिका. ) ते च गुणा अगुणपरिहारेण अखण्डा अस्फुटिताश्च भवन्तीति प्रथममगुणा उच्यन्ते । बालोऽज्ञानी यानि दशाष्टौ अष्टादश स्थानानि असंयमस्थानानि वक्ष्यमाणलक्षणानि आश्रित्य अपराध्यति तत्सेवनया अपराधं प्राप्नोति । कथमपराध्यतीत्याह । तत्र अन्यतरे अष्टादशानामसंयमस्थानानां मध्ये एकतरस्मिन्नपि स्थाने वर्तमानः प्रमादेन निर्ग्रन्थत्वान्निर्ग्रन्थभावाद् भ्रश्यति निश्चयनयेन अपैति । कः प्रयोगो भाव इति ॥ ७ ॥

७ पृथ्वीकाय, ८ अप्काय, ९ तेजस्काय, १० वायुकाय, ११ वनस्पतिकाय अने १२ त्रसकाय तेनी विराधना तथा ( अकप्पो के० ) अकल्पः एटले १३ अकल्प आचारादिक, ( गिहिनायणं के० ) गृहिनाजनं एटले १४ गृहस्थनुं नाजन कांस्यपात्रादिक तथा ( पलिअंक के० ) १५ पर्यंकः एटले ढालीयो तथा ( निसज्जा के० ) निषद्या एटले १६ वेसवानां अनेक प्रकारनां आसन (सिणाणं के०) स्नानं एटले १७ स्नान करवुं ते ( सोन्ना के० ) १८ शोना ए अढार स्थानक ( वज्जणं के० ) वर्जनं एटले वर्जवां. ॥ ८ ॥

( दीपिका. ) कानि पुनस्तानि स्थानानीत्याह । व्रतषट्कं प्राणातिपातविरमणमृषावादविरमणादत्तादानविरमणब्राह्मविरमण परिग्रहविरमणरात्रिनोजनविरमणरूपम् । तथा कायषट्कं पृथिव्यप्तेजोवायुवनस्पतित्रसकायरूपम् । अकल्पकः शिक्षकस्थापनाकल्पादिर्वक्ष्यमाणः । १३ गृहिनाजनं गृहस्थसंबन्धिकांस्यनाजनादि प्रतीतम् । १४ पर्यङ्कः शयनीयविशेषः प्रतीतः । १५ निषद्या च गृहे एकानेकरूपा । १६ स्नानं देशतः सर्वतश्च द्वेधा । १७ शोनावर्जनं च विनूषापरित्यागः । १८ वर्जनशब्दः प्रत्येकमनिसंबध्यते । स्नानवर्जनमित्यादि ॥ ८ ॥

( टीका. ) अमुमेवार्थं सूत्रस्पर्शनिर्युक्त्या स्पष्टयति । अढारस ठाणाइं, आयारकहाए जाइं नणियाइं ॥ तेसिं अन्नतरागं, सेवंतु न होइ सो समणो ॥३३॥व्या०॥ अष्टादश स्थानान्याचारकथायां प्रस्तुतायां यानि नणितानि तीर्थकरैः । तेषामन्यतरस्थानं सेवमानो न नवत्यसौ श्रमण आसेवक इति गाथार्थः ॥ ३३ ॥ कानि पुनस्तानि स्थानानीत्याह निर्युक्तिकारः ॥ वयछक्कं कायछक्कं, अकप्पो गिहिनायणं ॥ पलियंकनिसेज्जा य सिणाणं सोहवज्जणं॥३४॥व्या०॥ व्रतषट्कं प्राणातिपातनिवृत्त्यादीनि रात्रिनोजनविरतिषष्ठानि षड् व्रतानि । कायषट्कं पृथिव्यादयः षड् जीवनिकायाः । अकल्पः शिक्षकस्थापनाकल्पादिर्वक्ष्यमाणः । गृहिनाजनं गृहस्थसंबन्धि कांस्यनाजनादि प्रतीतम् । पर्यङ्कः शयनीयविशेषः प्रतीतः । निषद्या च गृहे एकानेकरूपा । स्नानं देशसर्वनेदनिन्नम् । शोनावर्जनं विनूषापरित्यागः । वर्जनमिति च प्रत्येकमनिसंबध्यते । शोनावर्जनं स्नानवर्जनमित्यादीति गाथार्थः ॥ ८ ॥

तहिमं पढमं ठाणं, महावीरेण देसिअं ॥
अहिंसा निउणा दिठा, सव्वनूएसु संजमो ॥ ९ ॥

( अवचूरिः ) तत्राष्टादशविधस्थानगणे व्रतषट्के वा अनासेवनद्वारेणेदं वक्ष्यमाणलक्षणं प्रथमं गुणस्थानं महावीरेण देशितं कथितम् । अहिंसा निपुणा आ-

तेम थवाथी देशविराधना तथा सर्वविराधनारहित थाय छे, ते माटे प्रथम अ-वगुणो कहेछे. ( जाइं के० ) यानि एटले जे ( दस अठय ठाणाइं के० ) दशाष्टकस्थानानि एटले दस अने आठ मली अढार स्थानकोने आश्रय करीने (वालो के०) बालः एटले बालक ( अवरज्झई के० ) अपराध्यति एटले अपराध करे छे. ते केवी रीते अपराध करे छे तो के, ( तत्थ के० ) तत्र एटले ते अढार स्तानकमांहेलुं ( अन्नयरे ठाणे के०)अन्यतरस्मिन् स्थाने एटले हर कोइ एक स्थानकनेविषे प्रमादथी जे वर्ते, ते ( निग्गंथत्ताउ के० ) निर्ग्रंथत्वतः एटले निर्ग्रंथ पणा थकी ( जस्सइ के० ) भ्रश्यति एटले भ्रष्ट थाय छे, एटले साधुनां व्रत भांगे छे.॥ ७ ॥

( दीपिका. ) ते च गुणा अगुणपरिहारेण अखण्डा अस्फुटिताश्च भवन्तीति प्रथममगुणा उच्यन्ते । बालोऽज्ञानी यानि दशाष्टौ अष्टादश स्थानानि असंयमस्थानानि वक्ष्यमाणलक्षणानि आश्रित्य अपराध्यति तत्सेवनया अपराधं प्राप्नोति । कथमपराध्यतीत्याह । तत्र अन्यतरे अष्टादशानामसंयमस्थानानां मध्ये एकतरस्मिन्नपि स्थाने वर्तमानः प्रमादेन निर्ग्रन्थत्वान्निर्ग्रन्थभावाद् भ्रश्यति निश्चयनयेन अपैति । कः पूर्वोक्तो बाल इति ॥ ७ ॥

( टीका. ) ते चागुणपरिहारेणाखंडास्फुटिताभवन्तीति अगुणास्तावदुच्यन्ते । दसत्ति सूत्रम् । दशाष्टौ च स्थानान्यसंयमस्थानानि वक्ष्यमाणलक्षणानि यान्याश्रित्य बालोऽज्ञोऽपराध्यति तत्सेवनयापराधमाप्नोति । कथमपराध्यतीत्याह । तत्रान्यतरे स्थाने वर्तमानः प्रमादेन निर्ग्रन्थत्वान्निर्ग्रन्थभावाद्भ्रश्यति निश्चयनयेनापैति बाल इति सूत्रार्थः ॥ ७ ॥

वयछक्कं कायछक्कं, अकप्पो गिहिभायणं ॥
पलियंकनिसज्जा य, सणाणं सोहवज्जणं ॥ ८ ॥

( अवचूरिः ) कानि पुनस्तानि स्थानानीत्याह । व्रतषट्कं प्राणातिपातविरत्यादीनि रात्रिभोजनविरतिपर्यन्तानि । कायषट्कं पृथिव्यादयः । अकल्पः शिक्षकस्थापनाकल्पादि वक्ष्यमाणः। गृहिभाजनं गृहस्थसंबन्धिकांस्यभाजनादि। पर्यङ्कः शयनीयविशेषः। निषद्या स्नानं देशसर्वभेदभिन्नं शोभावर्जनं विभूषणपरित्यागः वर्जनमिति सर्वत्र योज्यम् ॥८॥

( अर्थ. ) हवे ते अढार स्थानकनां नाम कही तेने वर्जवानो उपदेश कहे छे ( वयछक्कं के० ) व्रतषट्कं एटले १ प्राणातिपात, २ मृषावाद, ३ अदत्तादान, ४ ब्रह्मचर्य, ५ परिग्रह, ६ रात्रिभोजन ए छ तथा ( कायछक्कं के० ) कायषट्कं एटले

७ पृथ्वीकाय,८ अप्काय,९ तेजस्काय,१० वायुकाय, ११ वनस्पतिकाय अने १२ त्रसकाय तेनी विराधना तथा ( अकप्पो के० ) अकल्पः एटले १३ अकल्प आचारादिक, ( गिहिभायणं के० ) गृहिभाजनं एटले १४ गृहस्थनुं भाजन कांस्यपात्रादिक तथा ( पलिअंक के० ) १५ पर्यंकः एटले ढालीयो तथा ( निसज्जा के० ) निषद्या एटले १६ वेसवानां अनेक प्रकारनां आसन (सिणाणं के०) स्नानं एटले १७ स्नान करवुं ते ( सोभा के० ) १८ शोभा ए अढार स्थानक ( वज्जणं के० ) वर्जनं एटले वर्जवां. ॥ ८ ॥

( दीपिका. ) कानि पुनस्तानि स्थानानीत्याह । व्रतषट्कं प्राणातिपातविरमणमृषावादविरमणादत्तादानविरमणब्रह्मविरमण परिग्रहविरमणरात्रिभोजनविरमणरूपम् । तथा कायषट्कं पृथिव्यप्तेजोवायुवनस्पतित्रसकायरूपम् । अकल्पकः शिक्षकस्थापनाकल्पादिर्वक्ष्यमाणः । १३ गृहिभाजनं गृहस्थसंबन्धिकांस्यभाजनादि प्रतीतम् । १४ पर्यङ्कः शयनीयविशेषः प्रतीतः । १५ निषद्या च गृह एकानेकरूपा । १६ स्नानं देशतः सर्वतश्च द्वेधा । १७ शोभावर्जनं च विभूषापरित्यागः । १८ वर्जनशब्दः प्रत्येकमभिसंबध्यते । स्नानवर्जनमित्यादि ॥ ८ ॥

( टीका. ) अमुमेवार्थं सूत्रस्पर्शनिर्युक्त्या स्पष्टयति । अठारस ठाणाइं, आयारकहाए जाइं भणियाइं ॥ तेसिं अन्नतरागं, सेवंतु न होइ सो समणो ॥३३॥व्या०॥ अष्टादश स्थानान्याचारकथायां प्रस्तुतायां यानि भणितानि तीर्थकरैः । तेषामन्यतरस्थानं सेवमानो न भवत्यसौ श्रमण आसेवक इति गाथार्थः ॥ ३३ ॥ कानि पुनस्तानि स्थानानीत्याह निर्युक्तिकारः ॥ वयछक्कं कायछक्कं, अकप्पो गिहिभायणं ॥ पलियंकनिसेज्जा य सिणाणं सोहवज्जणं ॥३४॥ व्या०॥ व्रतषट्कं प्राणातिपातनिवृत्त्यादीनि रात्रिभोजनविरतिषष्ठानि षड् व्रतानि । कायषट्कं पृथिव्यादयः षड् जीवनिकायाः । अकल्पः शिक्षकस्थापनाकल्पादिर्वक्ष्यमाणः । गृहिभाजनं गृहस्थसंबन्धि कांस्यभाजनादि प्रतीतम् । पर्यङ्कः शयनीयविशेषः प्रतीतः । निषद्या च गृह एकानेकरूपा । स्नानं देशसर्वभेदभिन्नम् । शोभावर्जनं विभूषापरित्यागः । वर्जनमिति च प्रत्येकमभिसंबध्यते । शोभावर्जनं स्नानवर्जनमित्यादीति गाथार्थः ॥ ८ ॥

तत्थिमं पढमं ठाणं, महावीरेण देसिअं ॥
अहिंसा निउणा दिठा, सव्वभूएसु संजमो ॥ ९ ॥

( अवचूरिः ) तत्राष्टादशविधस्थानगणे व्रतषट्के वा अनासेवनद्वारेणेदं वक्ष्यमाणलक्षणं प्रथमं गुणस्थानं महावीरेण देशितं कथितम् । अहिंसा निपुणा आ-

धाकर्माद्यपरिभोगाद् दृष्टा साक्षात्कर्मसाधकत्वेनोपलब्धा । अस्यामेव महावीरदेशितायां सर्वभूतेषु सर्वभूतविषयः संयमो नान्यत्र ॥ ए ॥

---

( अर्थ. ) (तहिमं के०) तत्रेदं एटले ते अढारस्थानकमाहेलुं आ (पढमं के०) प्रथमं एटले प्रथम (ठाणं के०) स्थानं एटले स्थानक (महावीरेण के०) महावीरस्वामीए (देसिअं के०) देशितं एटले अनासेवनद्वारे करी कहेलुं छे. ते केम तथा शुं कहेलुं छे तो के, (अहिंसा के०) जीवदया (निउणा के०) निपुणा एटले भली घणा सुखनी देनारी एवी(दिठा के०) दृष्टा एटले दीठी छे. ते कारण माटे (सव्वभूएसु के०) सर्वभूतेषु एटले प्राणिमात्रने विषे (संजमो के०) संयमः एटले संयम राखवो. अर्थात् दया राखवी. ॥ए॥

---

( दीपिका. ) गुणा अष्टादशस्थानेषु अखण्डास्फुटिताः कर्तव्यास्तत्र विधिमाह । तत्र अष्टादशविधस्थानगणे व्रतषट्के वा महावीरेण भगवता इदं वक्ष्यमाणलक्षणं प्रथमं स्थानमनासेवनद्वारेण देशितं कथितम् । किं तदित्याह । अहिंसा न हिंसा अहिंसा जीवदया । इयं च सामान्यतः प्रभूतैर्दर्शितेत्यत आह । किंभूताहिंसा । निपुणा आधाकर्माद्यपरिभोगतः कृतकारितादिपरिहारेण सूक्ष्मा न आगमद्वारेण देशिता । अपि तु दृष्टा साक्षात्कर्मसाधनत्वेनोपलब्धा । किमिति इयमेव निपुणा इत्याह । यतोऽस्यामेव महावीरदेशितायां सर्वभूतेषु सर्वभूतविषयः संयमो नान्यत्र उद्दिश्य कृतादिभोगविधानादिति ॥ ए ॥

---

( टीका. ) व्याख्याता सूत्रस्पर्शनिर्युक्तिरधुना सूत्रान्तरं व्याख्यायते । अस्य चायमभिसंबन्धः। गुणा अष्टादशसु स्थानेषु अखण्डास्फुटिताः कर्तव्यास्तत्र विधिमाह। तहिमं ति सूत्रम् । तत्राष्टादशविधे स्थानगणे व्रतषट्कं वा अनासेवनाद्वारेणेदं वक्ष्यमाणलक्षणं प्रथमं स्थानं महावीरेण भगवतापश्चिमतीर्थकरेण देशितं कथितम् । यदुताहिंसेति। इयं च सामान्यतः प्रभूतैर्दर्शितेत्यत आह । निपुणा आधाकर्माद्यपरिभोगतः कृतकारितादिपरिहारेण सूक्ष्मा । नो आगमद्वारेण देशिता । अपितु दृष्टा साक्षात्कर्मसाधनत्वेनोपलब्धा । किमितीयमेव निपुणेत्यत आह । यतोऽस्यामेव महावीरदेशितायां सर्वभूतेषु सर्वभूतविषयः संयमो नान्यत्रोद्दिश्यकृतादिभोगविधानादिति सूत्रार्थः॥ए॥

जावंति लोए पाणा, तसा अडुव थावरा ॥
ते जाणमजाणं वा, न हणे णो विघायए ॥ १० ॥

---

( अवचूरिः ) यावन्तो लोके प्राणास्त्रसास्तथा स्थावराश्च तान् रागाद्यभिभूतो

व्यापादनबुद्ध्या जानन्वा पारतन्त्र्येण वा न हन्यात् । नापिघातयेदन्यैः । एकग्रहणे तज्जातीयग्रहणाद् घ्नतोऽप्यन्यान्न समनुजानीयात् ॥ १० ॥

( अर्थ. ) ए पूर्वोक्त जीवहिंसानिषेधने स्पष्ट करी कहे छे. ( जावंति के० ) यावन्ति एटले जेटला (लोए के०) लोके एटले लोकने विषे ( तसा के० ) त्रसाः एटले त्रस एवा ( अडुव के० ) अथवा ( थावरा के०) स्थावराः एटले स्थावर एवा ( पाणा के०)प्राणिनः एटले जीवो छे. (ते के०) तान् एटले ते जीवने ( जाणमजाणं वा के० ) जानन्नजानन्वा एटले जाणते प्रयोजने अने अजाणते प्रमादे करी ( न हणे के० ) न हन्यात् एटले हणे नहि. तेम ( णोविघायए के० ) नापिघातयेत् एटले अनेरा पासे विघात करावे नहि. अने विघात करनार वीजाने अनुमोदे नहिं. ॥ १० ॥

( दीपिका. ) एतदेव स्पष्टयन्नाह । यतो हि जगवत इयमाज्ञा यावन्तो लोके केचन प्राणिनस्त्रसा द्वीन्द्रियादयः । अथवा स्थावराः पृथिव्यादयस्तान् जानन् रागाद्यभिभूतो व्यापादनबुद्ध्या अजानन् वा प्रमादपारतन्त्र्येण साधुस्तान् जीवान् न हन्यात् स्वयम् । नचाभिघातयेदन्यैर्नच घ्नतोऽप्यन्यान् समनुजानीयात् । अतो निपुणदृष्टेति ॥ १० ॥

( टीका. ) एतदेव स्पष्टयन्नाह । जावंति सूत्रम् । यतो हि भागवत्याज्ञा । यावन्तः केचन लोके प्राणिनस्त्रसा द्वीन्द्रियादयः । अथवा स्थावराः पृथिव्यादयः । तान् जानन् रागाद्यभिभूतो व्यापादनबुद्ध्या अजानन्वा प्रमादपातन्त्र्येण न हन्यात् स्वयम् । नापि घातयेदन्यैः । एकग्रहणे तज्जातीयग्रहणाद् घ्नतोऽप्यन्यान्न समनुजानीयादतो निपुणा दृष्टेति सूत्रार्थः ॥ १० ॥

सवे जीवा वि इछंति, जीविउं न मरिज्जिउं ॥
तम्हा पाणिवहं घोरं, निग्गंथा वज्जयंति णं ॥ ११ ॥

( अवचूरिः) सर्वे जीवा अपि इच्छन्ति जीवितुं न मर्तुं प्राणस्य वल्लभत्वात् । यस्मादेवं तस्मात्प्राणिवधं घोरं रौद्रं दुःखहेतुत्वान्निर्ग्रन्था वर्जयन्ति । णमलंकारे ॥ ११ ॥

( अर्थ. ) जीव अहिंसाथीज केम जव्य कहेवाय ते कहे छे. ( सवे वि के० ) सर्वेऽपि एटले सर्वे पण ( जीवा के० ) जीवो ( जीविउं के० ) जीवितुं एटले जीववाने ( इछंति के० ) इछा करे छे. परंतु ( मरिज्जिउं के० ) मर्तुं एटले मरवाने इछा करता नथी. कारण के, सर्व प्राणीने जीववानी आशा परिपूर्ण रहे छे. (तम्हा के०) तस्मात् एटले ते कारण माटे (निग्गंथा के०) निर्ग्रन्थाः एटले निर्ग्रंथ एवा साधुर्ज (घोरं के०)

धाकर्माद्यपरिभोगाद् दृष्टा साक्षात्कर्मसाधकत्वेनोपलब्धा । अस्यामेव महावीरदेशितायां सर्वभूतेषु सर्वभूतविषयः संयमो नान्यत्र ॥ ए ॥

---

( अर्थ. ) (तत्थिमं के०) तत्रेदं एटले ते अढारस्थानकमाहेलुं आ (पढमं के०) प्रथमं एटले प्रथम (ठाणं के०) स्थानं एटले स्थानक (महावीरेण के०) महावीरस्वामीए (देसियं के०) देशितं एटले अनासेवनद्वारे करी कहेलुं छे. ते केम तथा शुं कहेलुं छे तो के, (अहिंसा के०) जीवदया (निउणा के०) निपुणा एटले भली घणा सुखनी देनारी एवी (दिठ्ठा के०) दृष्टा एटले दीठी छे. ते कारण माटे (सव्वभूएसु के०) सर्वभूतेषु एटले प्राणिमात्रने विषे (संजमो के०) संयमः एटले संयम राखवो. अर्थात् दया राखवी. ॥ए॥

---

( दीपिका. ) गुणा अष्टादशस्थानेषु अखण्डास्फुटिताः कर्तव्यास्तत्र विधिमाह । तत्र अष्टादशविधस्थानगणे प्रतपट्टे वा महावीरेण भगवता इदं वक्ष्यमाणलक्षणं प्रथमं स्थानमनासेवनद्वारेण देशितं कथितम् । किं तदित्याह । अहिंसा न हिंसा अहिंसा जीवदया । इयं च सामान्यतः प्रभूतैर्दर्शितेत्यत आह । किंभूताहिंसा । निपुणा आधाकर्माद्यपरिभोगतः कृतकारितादिपरिहारेण सूक्ष्मा न आगमद्वारेण देशिता । अपि तु दृष्टा साक्षात्कर्मसाधनत्वेनोपलब्धा । किमिति इयमेव निपुणा इत्याह । यतोऽस्यामेव महावीरदेशितायां सर्वभूतेषु सर्वभूतविषयः संयमो नान्यत्र अहिंसा कृतादियोगविधानादिति ॥ ए ॥

---

( टीका. ) व्याख्याता सूत्रस्पर्शनिर्युक्तिरधुना सूत्रान्तरं व्याख्यायते । अस्य चाभिसंबन्धः । गुणा अष्टादशसु स्थानेषु अखण्डास्फुटिताः कर्तव्यास्तत्र विधिमाह । तत्थिमं ति सूत्रम् । तत्राष्टादशविधे स्थानगणे व्रतपट्के वा अनासेवनाद्वारेणेदं वक्ष्यमाणलक्षणं प्रथमं स्थानं महावीरेण भगवता पश्चिमतीर्थकरेण देशितं कथितम् । यदुताहिंसेति । इयं च सामान्यतः प्रभूतैर्दर्शितेत्यत आह । निपुणा आधाकर्माद्यपरिभोगतः कृतकारितादिपरिहारेण सूक्ष्मा । नो आगमद्वारेण देशिता । अपितु दृष्टा साक्षात्कर्मसाधनत्वेनोपलब्धा । किमितीयमेव निपुणेत्यत आह । यतोऽस्यामेव महावीरदेशितायां सर्वभूतेषु सर्वभूतविषयः संयमो नान्यत्रोद्दिश्यकृतादियोगविधानादिति सूत्रार्थः ॥ ए ॥

जावंति लोए पाणा, तसा अदुव थावरा ॥
ते जाणमजाणं वा, न हणे णो विघायए ॥ १० ॥

---

( अवचूरिः ) यावन्तो लोके प्राणास्त्रसास्तथा स्थावराश्च तान् रागादिभिर

व्यापादनबुद्ध्या जानन्वा पारतन्त्र्येण वा न हन्यात्। नापिघातयेदन्यैः। एकग्रहणे तज्जातीयग्रहणाद् घ्नतोऽप्यन्यान्न समनुजानीयात्॥ १०॥

(अर्थ.) ए पूर्वोक्त जीवहिंसानिषेधने स्पष्ट करी कहे छे. (जावंति के०) यावन्ति एटले जेटला (लोए के०) लोके एटले लोकने विषे (तसा के०) त्रसाः एटले त्रस एवा (अडुव के०) अथवा (थावरा के०) स्थावराः एटले स्थावर एवा (पाणा के०)प्राणिनः एटले जीवो छे. (ते के०) तान् एटले ते जीवने (जाणमजाणं वा के०) जानन्नजानन्वा एटले जाणते प्रयोजने अने अजाणते प्रमादे करी (न हणे के०) न हन्यात् एटले हणे नहि. तेम (णोविघायए के०) नापिघातयेत् एटले अनेरा पासे विघात करावे नहि. अने विघात करनार बीजाने अनुमोदे नहिं.॥ १०॥

(दीपिका.) एतदेव स्पष्टयन्नाह। यतो हि भगवत इयमाज्ञा यावन्तो लोके केचन प्राणिनस्त्रसा द्वीन्द्रियादयः। अथवा स्थावराः पृथिव्यादयस्तान् जानन् रागाद्यभिभूतो व्यापादनबुद्ध्या अजानन् वा प्रमादपारतन्त्र्येण साधुस्तान् जीवान् न हन्यात् स्वयम्। नचाभिघातयेदन्यैर्नच घ्नतोऽप्यन्यान् समनुजानीयात्। अतो निपुणदृष्टेति॥ १०॥

(टीका.) एतदेव स्पष्टयन्नाह। जावंति सूत्रम्। यतो हि भागवत्याज्ञा। यावन्तः केचन लोके प्राणिनस्त्रसा द्वीन्द्रियादयः। अथवा स्थावराः पृथिव्यादयः। तान् जानन् रागाद्यभिभूतो व्यापादनबुद्ध्या अजानन्वा प्रमादपातन्त्र्येण न हन्यात् स्वयम्। नापि घातयेदन्यैः। एकग्रहणे तज्जातीयग्रहणाद् घ्नतोऽप्यन्यान्न समनुजानीयादतो निपुणा दृष्टेति सूत्रार्थः॥ १०॥

सव्वे जीवा वि इछंति, जीविउं न मरिज्जिउं॥
तम्हा पाणिवहं घोरं, निग्गंथा वज्जयंति णं॥ ११॥

(अवचूरिः) सर्वे जीवा अपि इछन्ति जीवितुं न मर्तुं प्राणस्य वल्लभत्वात्। यस्मादेवं तस्मात्प्राणिवधं घोरं रौद्रं दुःखहेतुत्वान्निर्ग्रन्था वर्जयन्ति। णमलंकारे॥ ११॥

(अर्थ.) जीव अहिंसाथीज केम भव्य कहेवाय ते कहे छे. (सव्वे वि के०) सर्वेऽपि एटले सर्वे पण (जीवा के०) जीवो (जीविउं के०) जीवितुं एटले जीववाने (इछंति के०) इछा करे छे. परंतु (मरिज्जिउं के०) मर्तुं एटले मरवाने इछा करता नथी. कारण के, सर्व प्राणीने जीववानी आशा परिपूर्ण रहे छे. (तम्हा के०) तस्मात् एटले ते कारण माटे (निग्गंथा के०) निर्ग्रन्थाः एटले निग्रंथ एवा साधुउ (घोरं के०)

घोरं एटले जयंकर एवा ( पाणवहं के० ) प्राणवधं एटले प्राणिवधने (
के० ) वर्जयंति एटले त्याग करे ठे. णं ठे ते वाक्यालंकारने अर्थे ठे. ॥ ११ ॥

( दीपिका. ) ननु अहिंसैव कथं नव्येत्यत आह । तस्मात्कारणाद् निग्रन्थाः
धवः प्राणवधं वर्जयन्ति । किंभूतं प्राणवधम् । घोरं रौद्रं दुःखहेतुत्वात् । तस्माद्
स्मात् । यतः सर्वे जीवा अपि सुखितादिभेदभिन्ना जीवितुमिछन्ति न मर्तुम् । कथ
प्राणवल्लभत्वात्तेषां सर्वेषाम् । णमिति वाक्यालंकारे ॥ ११ ॥

( टीका. ) अहिंसैव कथं साध्वीत्येतदेवाह । सव त्ति सूत्रम् । सर्वे जीवा अ
दुःखितादिभेदभिन्ना इछन्ति जीवितुं न मर्तुं प्राणवल्लभत्वात् । यस्मादेवं तस्मात्प्रा
णवधं घोरं रौद्रं दुःखहेतुत्वाद् निग्रन्थाः साधवो वर्जयन्ति भावतः । णमिति वा
क्यालंकार इति सूत्रार्थः ॥ ११ ॥

अप्पणठा परठा वा, कोहा वा जइ वा नया ॥
हिंसगं न मुसं बूआ, नो वि अन्नं वयावए ॥ १२ ॥

( अवचूरिः ) उक्तः प्रथमस्थानविधिः । द्वितीयस्थानमाह । आत्मार्थमात्मनिमित्तं
मग्लान एव ग्लानोऽहं ममानेन कार्यं परार्थमेव वा क्रोधाद्वा त्वं दास इति । एकमहणे
तज्जातीयमहणम् । मानाद्बहुश्रुतोऽहम् । मायातो भिक्षाटनासमर्थोऽहम् । लोभाल्लोभन
तरामलाभे सति प्रान्तस्य शुद्धस्याप्यशुद्धमिदमित्यादि । नयात्किंचिद्वितथं कृत्वा प्रा
यश्चित्तनयात्र कृतम् । हिंसकं परपीडाकारि न ब्रूयात् । नाप्यन्यं वादयेदन्यं वदन्त
मपि न समनुजानीयात् ॥ १२ ॥

( अर्थ. ) हवे बीजुं व्रत कहे ठे. ( अप्पणठा के० ) आत्मार्थं एटले पोताने
अर्थे तथा ( परठं के० ) परार्थं एटले पारके अर्थे ( कोहा वा के० ) क्रो
धाद्वा एटले क्रोध थकी एटले तुं दास ठे इत्यादि वाक्योए करी ( जइ वा के० )
यदि वा एटले अथवा मानमायादिकोने करी तथा ( नया के० ) नयाद्वा एटले नये
करी ( हिंसगं के० ) हिंसकं एटले हिंसा जेथी थाय तेवुं ( मुसं के० ) मृषा एटले खोटुं
( न बूआ के० ) न ब्रूयात् एटले बोले नहि. अने ( अन्नं वि के० ) अन्यमपि एटले
बीजाने पण ( नो वयावए के० ) नो वादयेत् एटले बोलावे नहि. ॥ १२ ॥

( दीपिका. ) उक्तः प्रथमस्थानविधिः । अथ द्वितीयस्थानविधिमाह । साधुर्मृषा
वचनं न वदेत् स्वयमात्मना । नापि मृषा अन्यं वादयेत् । एकग्रहणे तज्जातीय
ग्रहणमिति न्यायेन अन्यान् मृषा ब्रुवतो न समनुजानीयात् । किंभूतं मृषा । हिंसकं

परपीडाकारि। सर्वमेव किमर्थं न वदेत्। आत्मार्थमात्मनिमित्तम्। कथम्। अग्लान एव ग्लानोऽहं ममानेन कार्यमित्यादिरूपम्। तथा परार्थं वा परनिमित्तं वा एवमेव पूर्ववत्। तथा क्रोधाद्वा त्वं दास इत्यादिरूपम्। एकग्रहणेन तज्जातीयानां ग्रहणमिति न्यायात्। मानात्। कथम्। अबहुश्रुत एवाहं बहुश्रुत इत्यादिरूपम्। मायातो वा। कथम्। भिक्षाटनस्यालस्येन मम पादपीडा वर्त्तत इत्यादिरूपम्। लोभाद्वा। कथम्। शोभनतरस्यान्नस्य लाभे सति अन्तप्रान्तस्याहारस्य एषणीयत्वेऽप्यनेषणीयमिदमित्यादिरूपम् ७ यदि वा भयात्। कथम्। किंचित् पापं कृत्वा प्रायश्चित्तभयान्न कृतं मयेति वदति। एवं हास्यादिष्वपि योजना कार्या॥ १२॥

(टीका.) उक्तः प्रथमस्थानविधिः। अधुना द्वितीयस्थानविधिमाह। अप्पणठ त्ति सूत्रम्। आत्मार्थमात्मनिमित्तमग्लान एव ग्लानोऽहं ममानेन कार्यमित्यादि। परार्थं वा परनिमित्तं वा। एवमेव तथा क्रोधाद्वा त्वं दास इत्यादि। एकग्रहणे तज्जातीयग्रहणमिति मानाद्वाबहुश्रुत एवाहं बहुश्रुत इत्यादि। मायातो भिक्षाटनपरिजिहीर्षया पादपीडा ममेत्यादि। लोभाच्छोभनतरान्नलाभे सति प्रान्तस्यैषणीयत्वेऽप्यनेषणीयमिदमित्यादि। यदि वा भयात् किंचिद्वितथं कृत्वा प्रायश्चित्तभयान्न कृतमित्यादि। एवं हास्यादिष्वपि वाच्यम्। अतएवाह। हिंसकं परपीडाकारि सर्वमेव न मृषा ब्रूयात् स्वयम्। नाप्यन्यं वादयेत्। एकग्रहणे तज्जातीयग्रहणाच्च ब्रुवतोऽप्यन्यान्न समनुजानीयादित्यादीति सूत्रार्थः॥ १२॥

मुसावाउ उ लोगम्मि, सव्वसाहूहिं गरिहिउ॥
अविस्सासो अ भूआणं, तम्हा मोसं विवज्जए॥ १३॥

(अवचूरिः) मृषावादो हि लोके सर्वसाधुभिर्गर्हितो निन्दितः सर्वव्रतापकारित्वात् प्रतिज्ञातापालनात्। अविश्वास्यश्चाविश्वसनीयश्च भूतानां मृषावादी स्यात्। यस्मादेवं तस्मान्मृषावादं विवर्जयेत्॥ १३॥

(अर्थ.) वली पण ते मृषावाद वर्जवो एम कहे छे. (सव्वलोअम्मि के०) सर्वलोके एटले सर्व लोकने विषे (मुसावाउ के०) मृषावादः एटले मृषावाद (सव्वसाहूहिं के०) सर्वसाधुभिः एटले सर्व साधुउए (गरिहिउ के०) गर्हितः एटले जगत्मां निंदित छे. कारण के, ते सर्वने तापकारक छे. तेथी प्रतिज्ञा पालन करातो नथी (च के०) तथा वली मृषावाद करनार पुरुष (भूआणं के०) भूतानां एटले प्राणिमात्रोने (अविस्सासो के०) अविश्वास्यः एटले विश्वास करवा अयोग्य एवो

थाय छे. ( तम्हा के० ) तस्मात् एटले तेमाटे ( मोसं के० ) मृषा एटले मृषावादने ( विवज्जए के० ) विवर्जयेत् एटले त्याग करे. अर्थात् मृषावाद न करे. ए बीजुं स्थानक कह्युं. ॥ १३ ॥

( दीपिका. ) किमित्येतदेव मृषावदनं नेत्याह । मृषावादो हि लोके सर्वस्मिन्नेव सर्वसाधुनिर्गर्हितो निन्दितोऽस्ति । सर्वत्र तापकारित्वात्प्रतिज्ञातस्यापरिपालनात् । पुनर्मृषावादादविश्वास्योऽविश्वसनीयश्च भूतानां प्राणिनां मृषावादी भवेत् । यस्मादेवं तस्मात्साधुर्मृषावादं विवर्जयेत् ॥ १३ ॥

( टीका. ) किमित्येतदेवमित्याह । मुसावाओ त्ति सूत्रम् । मृषावादो हि लोके सर्वस्मिन्नेव सर्वसाधुनिर्गर्हितो निन्दितः । सर्वव्रतापकारित्वात् । प्रतिज्ञातापालनात् । अविश्वास्यश्चाविश्वसनीयश्च भूतानां मृषावादी भवति । यस्मादेवं तस्मान्मृषावादं विवर्जयेदिति सूत्रार्थः ॥ १३ ॥

चित्तमंतमचित्तं वा, अप्पं वा जइ वा बहुं ॥
दंतसोहणमित्तं वि, उग्गहंसि अजाइया ॥ १४ ॥

( अवचूरिः ) उक्तो द्वितीयस्थानविधिः । तृतीयस्थानमाह । चित्तवद् द्विपदादि । अचित्तवद्धिरण्यादि । अल्पं वा मूल्यतः प्रमाणतश्च । यदि वा बहु मूल्यप्रमाणान्यां दन्तशोधनमात्रमपि तथाविधं तृणाद्यवग्रहे यस्य यत्तत्तमयाचित्वा न गृह्णन्ति ॥१४॥

( अर्थ. ) हवे त्रीजुं स्थान कहे छे. ( चित्तमंतं के० ) चित्तवत् एटले द्विपदादि ( वा के० ) वली ( अचित्तं के० ) अचित्तवत् एटले हिरण्यादि ( अप्पं के० ) अल्पं एटले अल्पमूल्यवालुं ( जइवा के० ) यदिवा एटले अथवा ( बहुं के० ) बहु एटले मूल्यथी अथवा प्रमाणथी मोटुं ( दंतसोहणमित्तं पि के० ) दन्तशोधनमात्रमपि एटले दंतशोधनमात्र तेवुं तृणमात्र पण ( अजाइया के० ) अयाचित्वा एटले माग्या विना ( उग्गहंसि के० ) अवग्रहे एटले गृहस्थना अवग्रहमां पडेली वस्तुने साधु ग्रहण न करे. ॥१४॥

( दीपिका. ) उक्तो द्वितीयस्थानविधिः । सांप्रतं तृतीयस्थानविधिमाह । साधवो याचित्वा कदाचनापि न किमपि गृह्णन्ति । यतः साधूनां सर्वमवग्रहयाचनेन दत्तं ग्राह्यं नान्यथा । किं तदाह । चित्तवद् द्विपदादि । अचित्तवद् वा हिरण्यादि । अल्पं वा मूल्यतः प्रमाणतश्च । यदि वा बहु मूल्यप्रमाणाभ्यामेव । किं बहुना । दन्तशोधनमात्रमपि तथाविधं तृणादपि । एतावता साधवस्तृणाद्यप्यदत्तं न गृह्णन्ति किमन्यत् ॥१४॥

( टीका. ) उक्तो द्वितीयस्थानविधिः । तृतीयस्थानविधिमाह । चित्तमंत त्ति सूत्रम् ।

चित्तवद्द्विपदादि वा । अचित्तवद्वा हिरण्यादि । अल्पं वा मूल्यतः प्रमाणतश्च । यदि वा बहु मूल्यप्रमाणाभ्यामेव । किं बहुना । दन्तशोधनमात्रमपि तथाविधं तृणादि । अवग्रहे यस्य तत्तमयाचित्वा न गृह्णन्ति साधवः कदा चनेति सूत्रार्थः ॥ १४ ॥

तं अप्पणा न गिण्हंति नो वि गिण्हावए परं ॥
अन्नं वा गिण्हमाणं वि, नाणुजाणंति संजया ॥ १५ ॥

( अवचूरिः ) तच्चित्तवदादि आत्मना न गृह्णन्ति विरतत्वात् । नापि ग्राहयन्ति परं विरतत्वादेव । अन्यं वा गृह्णन्तमपि स्वयमेव न समनुजानन्ति संयताः ॥ १५ ॥

( अर्थ. ) फरीने पण तेज वात कहे छे.(संजया के०)संयताः एटले संयत जे साधुओ ते ( तं के० ) ते पूर्वोक्त सचित्त अने अचित्त वस्तुने ( अप्पणा के० ) आत्मना एटले पोते (न गिण्हंति के०) न गृह्णंति एटले ग्रहण करता नथी. तथा (परं के०) बीजापासे (नो वि गिण्हावए के०) नापि ग्राहयन्ति एटले ग्रहण करावे पण नहि. (वा के०) वळी (गिण्हमाणं पि के०) गृह्णन्तमपि एटले ग्रहण करतो होय तेने पण पोते (नाणुजाणं-ति के० ) नानुजानंति एटले अनुमोदना आपे नहि. ॥ १५ ॥

( दीपिका. ) पुनस्तदेवाह । संयताः तमिति तत्पूर्वोक्तं चित्तवदचित्तवदादि आत्मना स्वयं न गृह्णंति विरतत्वात् । नापि परं प्रति ग्राहयन्ति विरतत्वादेव । तथा अन्यं वा गृह्णन्तमपि स्वयमेव न समणुजाणंति नानुमन्यन्ते ॥ १५ ॥

( टीका. ) एतदेवाह । तं ति सूत्रम् । तच्चित्तवदादि आत्मना न गृह्णन्ति विरतत्वान्नापि ग्राहयन्ति परं विरतत्वादेव । तथान्यं वा गृह्णन्तमपि स्वयं नानुजानन्ति नानुमन्यन्ते संयता इति सूत्रार्थः ॥ १५ ॥

अबंभचरिअं घोरं, पमायं दुरहिठ्ठिअं ॥
नायरंति मुणी लोए, भेआययणवज्जिणो ॥ १६ ॥

( अवचूरिः ) उक्तस्तृतीयस्थानविधिः । चतुर्थस्थानविधिमाह । अब्रह्मचर्यं घोरं दुर्गतिहेतुत्वात् प्रमादमूलत्वाद् दुराश्रयं दुस्सेवमनन्तभवहेतुत्वाद् नाचरन्ति पुनर्ये लोके भेदश्चारित्रभेदस्तदायतनं तत्स्थानं तद्वर्जिनः ॥ १६ ॥

( अर्थ. ) चतुर्थ स्थानविधि कहे छे. (भेआययणवज्जिणो के०) भेदायतनवर्जिनः एटले भेद जे चारित्रभेदना स्थानक तेने वर्जता अर्थात् चारित्रातिचारथी भय पामता एवा (मुणी के०)मुनयः एटले मुनियो (लोए के०) लोके एटले मनुष्य लोकने विषे (दुरहिठ्ठिअं के०) दुरधिष्ठितं एटले दुराराध्य एवा तथा (पमायं के०) प्रमादं एटले

प्रमादनुं मूलकारण एवा अने ( घोरं के० ) घोरं एटले रौद्रगतिनुं हेतुरूप एवा ( अबंभचरिअं के० ) अब्रह्मचर्यं एटले अब्रह्मने (नायरंति के०) नाचरंति एटले आचरण करता नथी. अर्थात् अब्रह्मसेवन करता नथी. ॥ १६ ॥

( दीपिका. ) तृतीयस्थानविधिरुक्तः । अथ चतुर्थस्थानविधिमाह । मुनयो लोके मनुष्यलोकेऽब्रह्मचर्यं प्रतीतं नाचरन्ति न सेवन्ते । किंभूतमब्रह्म । घोरं रौद्रानुष्ठानहेतुत्वात् । पुनः किंभूतमब्रह्म। प्रमादं प्रमादवत्। कथम्। सर्वदा प्रमादमूलत्वात्। पुनः किंभूतमब्रह्म। दुरधिष्ठितं दुराश्रयं दुःसेवं विदितजिनवचनेन अनन्तसंसारहेतुत्वात् । यतश्चैवमतएव मुनयोऽब्रह्म न सेवन्त इत्यर्थः । किंभूता मुनयः । भेदायतनवर्जिनः । भेदश्चारित्रभेदस्तस्यायतनं स्थानमिदमब्रह्मचर्यमेव । उक्तन्यायात्तद्वर्जिनश्चारित्रातिचारभीरव इत्यर्थः ॥ १६ ॥

( टीका. ) उक्तस्तृतीयस्थानविधिः । चतुर्थस्थानविधिमाह । अबंभ त्ति सूत्रम् । अब्रह्मचर्यं प्रतीतं घोरं रौद्रं रौद्रानुष्ठानहेतुत्वात् । प्रमादं प्रमादवत् सर्वप्रमादमूलत्वात् । दुराश्रयं दुस्सेव्यं विदितजिनवचनेनानन्तसंसारहेतुत्वात् । यतश्चैवमतो नाचरन्ति नासेवन्ते मुनयो लोके मनुष्यलोके । किंविशिष्टा इत्याह । भेदायतनवर्जिनो भेदश्चारित्रभेदस्तदायतनं तत्स्थानमिदमेवोक्तन्यायात्तद्वर्जिनश्चारित्रातिचारभीरव इति सूत्रार्थः ॥ १६ ॥

मूलमेयमहम्मस्स, महादोससमुस्सयं ॥
तम्हा मेहुणसंसग्गं, निग्गंथा वज्जयंति णं ॥ १७ ॥

( अवचूरिः ) बीजमधर्मस्य पापस्य महतां दोषाणां चौर्यप्रवृत्त्यादीनां समुच्छ्रयं संघातं विदित्वेहिकापायाः तस्मात् मैथुनसंसर्गं संबन्धं योषिदालापाद्यपि निर्ग्रन्था वर्जयन्ति । णं वाक्यालंकारे ॥ १७ ॥

( अर्थ. ) वळी पण ( अहम्मस्स के० ) अधर्मस्य एटले अधर्मनुं ( मूलं के० ) मूळ तथा ( महादोससमुस्सयं के० ) महादोषसमुच्छ्रयं एटले चोरी प्रमुख महोटा दोषोनी उत्पत्तिनुं स्थानक छे, तेमां महादोषनो संचय छे, ( तम्हा के० ) तस्मात् एटले ते कारण माटे ( निग्गंथा के० ) निर्ग्रंथाः एटले निर्ग्रंथ एवा साधुउं ( एयं के० ) एतत् एटले आ ( मेहुणसंसग्गं के० ) मैथुनसंसर्गं एटले मैथुनना संसर्गने ( वज्जयंति के० ) वर्जयंति एटले त्याग करे छे. णं ए वाक्यालंकारार्थ छे. ॥१७॥

( दीपिका: ) अथ एतदेव निगमयति। णं इति वाक्यालंकारे। निर्ग्रन्थाः साधवः तस्मात् कारणात् मैथुनसंसर्गं मैथुनसंबन्धं योपित आलापाद्यपि वर्जयन्ति। तस्मात् कस्मात्। यत एतदब्रह्मसेवनमधर्मस्य पापस्य मूलं बीजमिति परलोकसंबन्धी अपायः। कष्टं पुनरेतद् महादोपसमुच्छ्रयं महतां दोपाणां चौर्यप्रवृत्त्यादीनां समुच्छ्रयं संघातवदिति इहलोकसंबन्धी अपायः। कष्टमिति उभयलोककष्टदातृत्वाद् मैथुनवर्जनं युक्तं साधूनाम् ॥ १७ ॥

---

( टीका. ) एतदेव निगमयति। मूलं ति सूत्रम्। मूलं बीजमेतदधर्मस्य पापस्येति पारलौकिकोऽपायः। महादोपसमुच्छ्रयं महतां दोपाणां चौर्यप्रवृत्त्यादीनां समुच्छ्रयं संघातवदित्यैहिकोऽपायः। यस्मादेवं तस्मान्मैथुनसंसर्गं मैथुनसंबन्धं योपिदालापाद्यपि निर्ग्रन्था वर्जयन्ति। णमिति वाक्यालङ्कार इति सूत्रार्थः ॥ १७ ॥

विडमुब्भेइमं लोणं, तिल्लं सप्पिं च फाणिअं॥
न ते संनिहिमिछंति, नायपुत्तवऊरया ॥ १८ ॥

---

( अवचूरिः ) उक्तश्चतुर्थस्थानविधिः। पञ्चमस्थानविधिमाह। विडं गोमूत्रादिपकमुद्भेद्यं सामुद्रादि। यद्वा। विडं प्रासुकमुद्भेद्यमप्रासुकमेवं द्विधा लवणम्। तैलं सर्पिश्च। फाणितं द्रवगुड एतल्लवणाद्येवमन्यच्च न ते साधवः संनिधिं कुर्वन्ति पर्युषितं न स्थापयन्ति ज्ञातपुत्रवचोरताः ॥ १८ ॥

---

( अर्थ. ) हवे पंचम स्थानविधि कहे छे. ( नायपुत्तवऊरया के० ) ज्ञातपुत्रवचोरताः एटले महावीर स्वामीना वचनमां रक्त एवा अर्थात् महावीर स्वामीना वचन प्रमाणे चालनार एवा साधुउ ( विडं के० ) विडलवण अथवा गोमूत्रादिपक एवुं ( लोणं के० ) लवण तथा ( उब्भेइमं के० ) उद्भेद्यं एटले समुद्रना जलथी थतुं लवण अथवा विड एटले प्रासुक अने उद्भेद्य एटले अप्रासुक लवण कह्युं तथा ( तिल्लं के० ) तैलं एटले तेल ( सप्पिं के० ) सर्पिः एटले घृत ( फाणिअं के० ) फाणितं एटले गोलनी राव ( ते के० ) ते सर्व वस्तुउने ( संनिहिं के० ) संनिधिं एटले रात्रिवास राखवाने ( न इछंति के० ) इछता नथी. ॥ १८ ॥

---

( दीपिका. ) चतुर्थस्थानविधिः प्रोक्तः। अथ पञ्चमस्थानविधिमाह। साधव एतेपां सन्निधिं न कुर्वंति पर्युपितम्। कोऽर्थः। रात्रौ रक्षितं न स्थापयन्ति। किंविशिष्टाः साधवः। ज्ञातपुत्रवचोरताः। ज्ञातपुत्रः श्रीवर्द्धमानस्वामी तस्य वचने निस्संगताप्रतिपादनतत्परे रता आसक्ताः। केपां सन्निधिं न कुर्वन्ति तान्याह। विडं गोमू-

आदिपकम् १ उद्भेद्यं सामुद्रादि २ विडं प्रासुकमुद्भेद्यमप्रासुकमित्येवं द्विप्रकार
तथा तैलं ३ सर्पिश्च घृतं ४ फाणितं द्रवगुडः ५ एतच्च लवणाद्यपि एवं वि
मन्यच्च रात्रौ न रक्षन्तीत्यर्थः ॥ १८ ॥

( टीका. ) प्रतिपादितश्चतुर्थस्थानविधिः । इदानीं पञ्चमस्थानविधिमाह । वि
सूत्रम् । विडं गोमूत्रादिपक्वं, उद्भेद्यं सामुद्रादि । यद्वा विडं प्रासुकमुद्भेद्यमप्रा
मप्येवं द्विप्रकारं लवणम् । तथा तैलं सर्पिश्च फाणितम् । तत्र तैलं प्रतीतं, सर्पि
फाणितं द्रवगुडः । एतल्लवणाद्येवंप्रकारमन्यच्च न ते साधवः संनिधिं कुर्वन्ति प
पितं स्थापयन्ति । ज्ञातपुत्रवचोरता जगवद्वर्धमानवचसि निःसंगताप्रतिपादनप
सक्ता इति सूत्रार्थः ॥ १८ ॥

लोहस्सेसणुफासे, मन्ने अन्नयरामवि ॥
जे सिआ सन्निहिं कामे, गिही पव्वइए न से ॥ १९ ॥

( अवचूरिः ) संनिधिदोषमाह । लोजस्यैपोऽनुस्पर्शोऽनुजावः । यदेतत्संनिधिकरण
म् । मन्ये मन्यन्ते प्राकृतत्वादेकवचनम् । एवमाहुस्तीर्थकरगणधरा अन्यतरामपि यः
स्यात्संनिधिं कामयते सेवते । गृहस्थोऽसौ न प्रव्रजितः। प्रव्रजितस्य दुर्गतेरजावात्॥ १९॥

( अर्थ. ) हवे संनिधि राखवाना दोष कहे छे. जे संनिधिनुं करवुं छे, ते ( एस
के० ) एषः एटले आ चारित्रने विघ्न करनार चतुर्थ कषाय एवा ( लोजस्स के० )
लोजस्य एटले लोजनो (अणुफास के०) अनुस्पर्शः एटले महिमा छे. ते कारण माटे हुं
(मन्ने के०) मन्ये एटले मानुं छुं के (जे के०) ये एटले जे साधुओ (अन्नयरामवि के०) अ
न्यतरामपि एटले थोडी पण ( संनिहिं के० ) सनिधिं एटले संनिधिने ( सिआ के० )
स्यात् कदाचित् एटले जो कदाचित् ( कामे के० ) कामयते एटले सेवन करे, तो ते
साधु ( गिही के० ) गृही एटले गृहस्थ जाणवो. पण ( से के० ) ते ( पव्वइए के० )
प्रव्रजितः एटले प्रव्रजित ( न के० ) नथी. संनिधि एटले संनिधीयते एटले नजीक
कराय छे आत्माने नरकादिकने विषे जेथी तेने संनिधि कहियें. ॥ १९ ॥

( दीपिका. ) अथ सन्निधिदोषमाह । लोजस्य चारित्रविघ्नकारिणश्चतुर्थकषा
स्य एषोऽनुस्पर्श एषोऽनुजावो यदुत संनिधीकरणमिति । यतश्चैवमतो मन्ये मन्यन्ते
प्राकृतशैल्या एकवचनम् । एवं तीर्थकरगणधरा आहुः । अन्यतरां स्तोकामपि यः स्यात्
कदाचित् संनिधिं कामयते सेवते कामी । अतः स जावतो गृही गृहस्थः । नासौ

प्रव्रजितः । कस्माद्दुर्गतिनिमित्तानुष्ठानप्रवृत्तेः । संनिधीयते नरकादिषु आत्मा अनेनेति संनिधिरिति शब्दार्थात् । प्रव्रजितस्य च दुर्गतिगमनाभावादिति ॥ १९ ॥

( टीका. ) संनिधिदोषमाह । लोभस्स त्ति सूत्रम् । लोभस्य चारित्रविघ्नकारिणश्चतुर्थकषायस्य एसणुफासत्ति । एषोऽनुस्पर्श एषोऽनुभावो यदेतत्संनिधिकरणमिति । यत एवमतो मन्ये मन्यन्ते । प्राकृतशैल्या एकवचनम् । एवमाहुस्तीर्थकरगणधराः । अयतरामपि स्तोकामपि यः स्यात् यः कदाचित्संनिधिं कामयते सेवते । गृही गृहस्थोऽसौ भावतः प्रव्रजितो नेति दुर्गतिनिमित्तानुष्ठानप्रवृत्तेः । संनिधीयते नरकादिष्वात्मानयेति संनिधिरिति शब्दार्थात्प्रव्रजितस्य च दुर्गतिगमनाभावादिति सूत्रार्थः ॥ १९ ॥

जं पि वत्थं व पायं वा, कंबलं पायपुंछणं ॥
तं पि संजमलज्जठा, धारंति परिहरंति अ ॥ २० ॥

( अवचूरिः ) यद्येवं तदा वस्त्रादिधारणे कथं साधूनामसंनिधिरित्याह । यद्यप्यागमोक्तं वस्त्रं वा पात्रं वा कम्बलं वर्षाकल्पादि । पादप्रोंछनं रजोहरणं तदपि संयमलज्जार्थं पात्रादि तदभावे गृहिभाजने षट्कायवधः । लज्जार्थं वस्त्रं धारयन्ति परिहरन्ति च परिभुञ्जते पुष्टालम्बनेन ॥ २० ॥

( अर्थ. ) आहिं कोइ शंका करे के, साधुओ वस्त्रादिक राखे छे, तो तेनो ते साधुओने संनिधि दोष केम न लागे? त्यांक कहे छे के, साधुओ (जं पि के०) यदपि एटले जे पण आगमोक्त एवा (वत्थं के०) वस्त्रं एटले चोलपट्टादि (च के०) वली (पायं के०) पात्रं एटले पात्रां (वा के०) वा एटले वली (कंबलं के०) कंबलं एटले वर्षाकल्पादि तथा (पायपुंछणं के०) पादप्रोञ्छनं एटले रजोहरण (तं पि के०) तदपि ते सर्वने पुष्टालंबनथी (संयमलज्जठा के०) संयमलज्जार्थं एटले संयमनी लाज पालवाने (धारयंति के०) धारण करे छे. (च के०) तथा वली (परिहरंति के०) परिभुंजते एटले भोगवे छे. पात्रादि विना संयमनुं रक्षण थाय नहि. कारण के, गृहस्थना पात्रमां संयमी जो भोजन करे, तो षट्कायनो वध थाय. अने जे वस्त्र छे, ते लज्जाने अर्थे छे. अथवा एम पण अर्थ थाय के, संयम तेज लज्जा कहियें. ते संयमरूप लज्जाना रक्षण माटे वस्त्रपात्रादि धारण करे छे.॥ २० ॥

( दीपिका. ) अत्राह । यद्येवं वस्त्रादि धारयतां साधूनां कथं न संनिधिरित्याह । साधवो यद्यपि आगमोक्तं वस्त्रं वा । चोलपट्टादि वा १ पात्रं वालाब्वादि २ कंबलं वर्षा-

अइरित्त अहिगमासा, अहिगा संवच्छरा अ कालंमि ॥ भावे खओवसमिए, इमा उ चूला मुणेअव्वा ॥ २८ ॥ व्याख्या ॥ अतिरिक्ता उचितकालात् समधिका अधिकमासकाः प्रतीताः। अधिकाः संवत्सराश्च षष्ट्याब्दाद्यपेक्षया काल इति कालचूडा। भाव इति भावचूडा क्षायोपशमिके भावे। इयमेव द्विप्रकारा चूडा मन्तव्या विज्ञेया क्षायोपशमिकत्वाच्छ्रुतस्येति गाथार्थः ॥ तत्रापि प्रथमा रतिवाक्यचूडा। अस्याश्चानुयोगद्वारोपन्यासः पूर्ववत्तावद्यावन्नामनिष्पन्ने निक्षेपे रतिवाक्येति द्विपदं नाम तत्र रतिनिक्षेप उच्यते। तत्रापि नामस्थापने अनादृत्य द्रव्यभावरत्यभिधित्सयाह। दव्वे दुहा उ कम्मे, नोकम्मरई अ सद्ददवाइ ॥ भावरई तस्सेव उ, उदए एमेव अरई वि ॥ २९ ॥ व्याख्या ॥ द्रव्यरतिरागमनोआगमज्ञशरीरेतरातिरिक्ता द्विधा कर्मद्रव्यरतिर्नोकर्मद्रव्यरतिश्च। तत्र द्रव्यकर्मरतीरतिवेदनीयं कर्म। एतच्च बद्धमनुदयावस्थं गृह्यते। नोकर्मद्रव्यरतिस्तु शब्दादिद्रव्याणि। आदिशब्दात् स्पर्शादिपरिग्रहः। रतिजनकानि रतिकारणानि। भावरतिस्तस्यैव तु रतिवेदनीयस्य कर्मण उदये भवति। एवमेवारतिरपि द्रव्यभावभेदभिन्ना यथोक्तरतिप्रतिपक्षतो विज्ञेयेति गाथार्थः ॥ उदाहृता रतिरिदानीं वाक्यमतिदिशन्नाह ॥ वक्कं तु पुव्वभणिअं, धम्मे रइकारगाणि वक्काणि ॥ जेणं मिसीए तेण, रइवक्के सा हवइ चूला ॥ ३० ॥ व्याख्या ॥ वाक्यं तु पूर्वभणितं वाक्यशुद्ध्यध्ययनेऽनेकप्रकारमुक्तं धर्मे चारित्ररूपे रतिकारकाणि रतिजनकानि च वाक्यानि येन कारणेनास्यां चूडायां तेन निमित्तेन रतिवाक्यैषा चूडा रतिकर्तॄणि वाक्यानि यस्यां सा रतिवाक्येति गाथार्थः ॥ इह च रत्यभिधानं सम्यक्सहनेन गुणकारिणीत्वोपदर्शनार्थम्। आह च॥ जह नाम आउरस्सिह, सीवणछेज्जेसु कीरमाणेसु ॥ जंतणमपच्छकुच्छा–मदोसविरई हिअकरी उ ॥ ३१ ॥ व्याख्या ॥ यथा नामेति प्रसिद्धमेतत्। आतुरस्य शरीरसमुत्थेन आगन्तुकेन वा व्रणेन ग्लानस्य इह लोके सीवनछेदेषु सीवनछेदकर्मसु क्रियमाणेषु सत्सु। किमित्याह। यन्त्रणं गलयन्त्रादिना अपथ्यकुत्सा अपथ्यप्रतिषेध आमदोषविरतिरजीर्णदोषनिवृत्तिः। हितकारिण्येव विपाकसुन्दरत्वादिति गाथार्थः ॥ दार्ष्टान्तिकयोजनामाह ॥ अठविहकम्मरोगा–उरस्स जीअस्स तह तिगिछाए ॥ धम्मे रई अधम्मे, अरई गुणकारिणी होइ ॥३२॥ व्याख्या ॥ अष्टविधकर्मरोगातुरस्य ज्ञानावरणीयादिरोगेण भावग्लानस्य जीवस्यात्मनः। तथा तेनैव प्रकारेण चिकित्सायां संयमरूपायां प्रक्रान्तायामस्नानलोचादिना पीडाभावेऽपि धर्मे श्रुतादिरूपे रतिरासक्तिरधर्मे तद्विपरीतेऽरतिरनासक्तिर्गुणकारिणी भवति निर्वाणसाधकत्वेनेति गाथार्थः ॥ एतदेव स्पष्टयति ॥ सज्झाय-

संजमतवे, वेआवच्चे अ झाणजोगे अ ॥ जो रमई नो रमई, असंजमम्मि सो वच्चई सिद्धिं ॥ ३३ ॥ व्याख्या ॥ स्वाध्याये वाचनादौ संयमे पृथिवीकायसंयमादौ तपसि अनशनादौ वैयावृत्ये चाचार्यादिविषये ध्यानयोगे च धर्मध्यानादौ यो रमते स्वाध्यायादिषु सक्त आस्ते । तथा न रमते न सक्त आस्तेऽसंयमे प्राणातिपातादौ। स व्रजति सिद्धिं गच्छति मोक्षम् ॥ इह च संयमतपोग्रहणे सति स्वाध्यायादिग्रहणं प्राधान्यख्यापनार्थमिति गाथार्थः ॥ उपसंहरन्नाह ॥ तम्हा धम्मे रइकारगाणि अरइकारगाणि उ अहम्मे ॥ ठाणाणि ताणि जाणे, जाइं जणिआइं अज्झयणे ॥३४॥ व्याख्या॥ तस्माद्धर्मे चारित्ररूपे रतिकारकाणि रतिजनकानि। अरतिकारकाणि चारतिजनकानि चाधर्मेऽसंयमे स्थानानि तानि वक्ष्यमाणानि जानीयात्। यानि जणितानि प्रतिपादितानि इहाध्ययने प्रक्रान्त इति गाथार्थः ॥ उक्तो नामनिष्पन्नो निक्षेपः। सांप्रतं सूत्रालापकनिष्पन्नस्यावसर इत्यादि पूर्ववत्तावद्यावत्सूत्रानुगमेऽस्खलितादिगुणोपेतं सूत्रमुच्चारणीयम्। तच्चेदम्। इह खलु जो इत्यादि। अस्य व्याख्या। इह खलु प्रव्रजितेन। इहेति जिनप्रवचने। खलुशब्दोऽवधारणे। स च जिन्नक्रम इति वक्ष्यामः। जो इत्यामन्त्रणे। प्रव्रजितेन साधुना। किंविशिष्टेनेत्याह। उत्पन्नदुःखेन संजातशीतादिशारीरस्त्रीनिषद्यादिमानसदुःखेन। संयमे व्यावर्णितस्वरूपे अरतिसमापन्नचित्तेन उद्वेगगताभिप्रायेण। संयमनिर्विण्णभावेनेत्यर्थः। स एव विशेष्यते। अवधानोत्प्रेक्षिणा। अवधानमपसरणं संयमादुत्प्राबल्येन प्रेक्षितुं शीलं यस्य स तथाविधस्तेन उत्प्रव्रजितुकामेनेति जावः। अनवधावितेनैवानुत्प्रव्रजितेनैवामूनि वक्ष्यमाणलक्षणान्यष्टादश स्थानानि सम्यग् जावसारं संप्रत्युपेक्षितव्यानि सुष्ठ्वालोचनीयानि जवन्तीति योगः। अवधावितस्य तु प्रत्युपेक्षणं प्रायोऽनर्थकमिति। तान्येव विशेष्यन्ते। हयरश्मिगजाङ्कुशपोतपताकाभूतानि। अश्वखलिनगजाङ्कुशबोधिस्थसितपटतुल्यानि। एतदुक्तं जवति। यथा हयादीनामुन्मार्गप्रवृत्तिकामानां रश्म्यादयो नियमनहेतवस्तथैतान्यपि संयमादुन्मार्गप्रवृत्तिकामानां जावसत्त्वानामिति। यतश्चैवमतः सम्यक् संप्रत्युपेक्षितव्यानि जवन्ति। खलुशब्दावधारणयोगात्सम्यगेव संप्रत्युपेक्षितव्यान्येवेत्यर्थः।

तं जहा ॥ हं जो दुस्समाइ दुप्पजीवी ॥१॥ लहुसगा इत्तरिआ गिहीणं कामजोगा ॥ २ ॥ जुज्जो अ सायबहुला मणुस्सा ॥३॥ इमे अ मे दुक्खे न चिरकालोवठाई जविस्सइ ॥ ४ ॥ ओमजणपुरक्कारे ॥ ५ ॥ वंतस्स य पडिआयणं ॥ ६ ॥ अहरगइवासोवसंपया ॥ ७ ॥ दुल्लहे खलु जो गिहीणं धम्मे गिहिवासमज्झे

वसंताणं ॥८॥ आयंके से वहाय होइ ॥ ए ॥ संकप्पे से वहाय होइ ॥१०॥ सोवक्केसे गिहवासे । निरुवक्केसे परिआए ॥ ११ ॥ बंधे गिहवासे । मुक्के परिआए ॥ १२ ॥ सावज्जे गिहवासे । अणवज्जे परिआए ॥ १३ ॥ बहुसाहारणा गिहीणं कामभोगा ॥ १४ ॥ पत्तेअं पुन्नपावं ॥ १५ ॥ अणिच्चे खलु भो मणुआण जीविए कुसग्गजलबिंदुचंचले ॥ १६ ॥ बहुं च खलु भो पावं कम्मं पगडं ॥१७॥ पावाणं च खलु भो कडाणं कम्माणं पुव्विं दुच्चिन्नाणं दुप्पडिकंताणं वेइत्ता मुक्खो नत्थि अवेइत्ता तवसा वा झोसइत्ता ॥१८॥ अठारसमं पयं भवइ ॥ भवइ अ इत्थ सिलोगो ।

---

( अवचूरिः ) तद्यथाहं भो इति शिष्यामन्त्रणे । दुःखमायां दुःप्रजीविनः प्राणिनः । दुःखेन कृच्छ्रेण प्रकर्षेण जीवितुं शीलाः । अथ किं गृहाश्रमेणेति । प्रथमं स्थानम् ॥ १ ॥ तथा लघवस्तुपमुष्टिवदसारा इत्वरा अल्पकालीना गृहिणां गृहस्थानां कामभोगा मदनकामप्रधानाः । विपाककटवश्चातः किं गृहाश्रमेणेति द्वितीयं स्थानम् ॥ २ ॥ भूयश्च शातबहुला मनुष्याः । भुक्तेष्वपि भोगेषु पुनरपि सुखाभिलाषिणः । अतः किं कामभोगैरिति तृतीयं स्थानम् ॥३॥ इदं च मे दुःखं शारीरमानसं कर्मफलजनितं न चिरकालोपस्थायि भविष्यति न बहुकालावस्थायि भावीत्यतः किं गृहाश्रमेण । चतुर्थं स्थानम् ॥४॥ न्यूनजनपूजा । प्रव्रजितो हि धर्मप्रभावाद्राजादिभिरभ्युत्थानासनाञ्जलिभिः पूज्यते । उत्प्रव्रजितेन तु न्यूनजनस्यापि स्वव्यसनगुप्तयेऽभ्युत्थानादि कार्यम् । अतः किं गृहाश्रमेण । पञ्चमं स्थानम् ॥५॥ वान्तस्य प्रत्यापानम् । भुक्तोज्झितपरिभोग इत्यर्थः । षष्ठं स्थानम् ॥ ६ ॥ अधोगतिवासोपसंपत् । अधोगतिर्नरकतिर्यग्गतिस्तस्यां वसनमधोगतिवासः । एतन्निमित्तभूतं कर्म गृह्यते । तस्योपसंपत् सामीप्येनाङ्गीकरणम् । सप्तमं स्थानम् ॥७॥ दुर्लभः खलु भो गृहिणां गृहपाशमध्ये वसतां धर्मः । पाशाः पुत्रकलत्राद्याः ॥ अष्टमं स्थानम् ॥८॥ आतङ्कः सद्योघाती विषूचिकादिरोगः । तस्य गृहिणोऽस्तधर्मबन्धोर्वधाय भवति । नवमं स्थानम् ॥ ए ॥ संकल्पः से तस्य गृहिण इष्टानिष्टवियोगप्राप्तिभ्यां वधाय भवतीति चिन्त्यम् । दशमं स्थानम् ॥ १० ॥ सोपक्लेश इति । उपक्लेशाः कृषिपाशुपाल्यवाणिज्याद्यनुष्ठानगताः शीतोष्णश्रमादयः । घृतलवणचिन्ताद्या इति एकादशं स्थानम् ॥ ११ ॥ एभिरेवक्लेशैरहितः प्रव्रज्यापर्याय इति चिन्त्यम् ॥ द्वादशं स्थानम् ॥ १२ ॥ बन्धो गृहवासः स-

दा तदूर्ध्वमनुष्ठानात् कोशकारकीटवदिति त्रयोदशं स्थानम् ॥ १३ ॥ मोक्षः पर्या योऽनवरतं कर्मनिगडापगमान्मुक्तवदिति चिन्त्यम् । चतुर्दशं स्थानम् ॥ १४ ॥ सावद्यो गृहवासः । प्राणातिपातादिप्रवृत्तेरिति पञ्चदशं स्थानम् ॥ १५ ॥ अनवद्य पर्यायः । अपाप इत्यर्थः । अहिंसादिपालनात्मकत्वात् । षोडशं स्थानम् ॥ १६ ॥ बहुसाधारणा गृहिणां कामभोगाः । चौरराजकुलादिसामान्या इति चिन्त्यम् । सप्तदशं स्थानम् ॥ १७ ॥ प्रत्येकं पुण्यपापमिति मातापितृकलत्रादिनिमित्तमनुष्ठितं यद्येन तत्तस्यैवानुष्ठातुर्नान्यस्येत्यष्टादशं स्थानम् ॥ १८ ॥ एतदन्तर्गतो वृद्धाभिप्रायेण शेषग्रन्थः । अन्ये तु व्याचक्षते । सोपक्लेशो गृहवास इत्यादिषु षट्सु स्थानेषु सप्रतिपक्षेषु स्थानत्रयम् । एवं च बहुसाधारणेति चतुर्दशम् ॥ १४ ॥ प्रत्येकमिति पञ्चदशम् ॥ १५ ॥ अनित्यमेव मनुष्याणामप्यायुः कुशाग्रजलबिन्दुवच्चञ्चलं सोपक्रमत्वादल्पसारं तदलं गृहाश्रमेणेति षोडशम् ॥ १६ ॥ बहु खलु पापं कर्म । चशब्दात्क्लिष्टं च । बह्वेव च पापकर्म चारित्रमोहनीयादि निर्वर्त्तितं मयेति गम्यम् । श्रामण्यप्राप्तावप्येवं कुबुद्धिप्रवृत्तेर्न किंचिद्गृहाश्रमेणेति सप्तदशम् ॥ १७ ॥ पापानां पुण्यानां च कृतानां खलुशब्दः कारितानुमतविशेषणार्थः । योगेस्त्रिभिः पूर्वमन्यजन्मे दुश्चरितानां प्रमादतश्चरितानाम् । दुःपराक्रान्तानां मिथ्यात्वाविरतिकषायजदुःपरिक्रान्तजनितानां दुःपराक्रान्तानामिह दुश्चरितं मद्यपानानृतभाषणादि । दुःपरिक्रान्तानि वधबन्धादीनि । तदेवंभूतानां कर्मणां वेदयित्वा मोक्षो नास्त्यवेदयित्वा । अनेन सकर्मकमोक्षव्यवच्छेदः । तपसा क्षपयित्वा । अनशनप्रायश्चित्तादिना तपसा प्रलयं नीत्वा । इह वेदनमुदयप्राप्तस्य व्याधेरिव । अनारब्धस्य क्रमशोऽनन्यनिबन्धनपरिक्लेशेन तपः क्षपणं तु सम्यगुपक्रमेणानुदीर्णोदीरणक्षपणवत् । अतस्तपोऽनुष्ठानमेव श्रेयो न किंचिद्गृहवासेनेत्यष्टादशम् ॥ १८ ॥ अत्राष्टादशस्थानव्यतिकर उक्तानुक्तार्थसंग्रहपरः श्लोक इति जातिपरो निर्देश इत्येकवचनम् ॥

---

( अर्थ. ) तं जहा इत्यादि सूत्र. ( तं जहा के० ) तद्यथा एटले ते अढार स्थानक आ रीते– ( हंभो के० ) हे शिष्यो ! ( दुस्समाइ के० ) दुःखमायां एटले आ अधम दुःखमा कालमां जीवो जे ते ( दुप्पजीवी के० ) दुःप्रजीविनः एटले घणा दुःखथी पोताना जीवित राखनारा एवा छे. अर्थात् इमणां कालदोषथी मोटा राजादिकने पण घणा दुःख भोगववा पडे छे, अने सुखोपभोग जोइये तेवा मलता नथी. माटे माठी गतिमां लइ जनार एवो गृहस्थाश्रम आ समयमां शुं कामनो? एवो विचार करवो. ए प्रथम स्थान थयुं. ( १ ) आ दुःखमा कालने विषे ( गिहिणं के० )

गृहिणां एटले गृहस्थना ( कामज्ञोगा के० ) कामज्ञोगाः एटले कामजोग जे ते ( लहुसगा के० ) लघवः एटले फोतरानी पेठे तुछ असार ठे. अने ( इत्तरिआ के० ) इत्वराः एटले क्षणिक ठे. तथा परिणामे कडवा ठे. माटे आ कालमां गृहस्थाश्रम शुं कामनो ? एवो विचार करवो. ए बीजुं स्थान थयुं. ( २ ) तेमज ( ज्ञुज्ञो अ के०) ज्ञूयश्च एटले फेर वली दुःखमा कालने विषे ( मणुस्सा के० ) मनुष्याः एटले मनुष्य जे ते (सायबहुला के०) स्वातिबहुलाः एटले घणी माया ( कपट ) करनारा ठे, अर्थात् मायाथी घणोज आकरो कर्मबंध थाय ठे. माटे गृहस्थाश्रम शा कामनो ? एवो विचार करवो. आ त्रीजुं स्थान थयुं. ( ३ ) तेमज ( इमे अ के० ) इदं च एटले आ ( मे के० ) मे एटले मारुं (डुरके के०) दुःखं एटले दुःख जे ते ( चिरकालोवठायि के० ) चिरकालोपस्थायि एटले घणा काल सुधी रहेवावालुं एवुं ( न ज्ञविस्सइ के० ) न ज्ञविष्यति एटले नथी. अर्थात् नरकादि गतिमां जे मे दुःख सह्या ठे, तेना प्रमाणमां आ संयम पालतां मने जे दुःख थाय ठे ते कशी गणतिमां नथी. वली आ संयमदुःख खमवाथी कर्मनिर्जरा थाय ठे. माटे ए मूकीने गृहस्थाश्रममां शुं सुख ठे ? गृहस्थाश्रममां आरंज समारंज होवाथी नरक प्राप्ति थाय ठे. एवो विचार करवो. आ चतुर्थ स्थान थयुं. (४) तेमज (ठंमजणपुरक्कारे के०) अवमजनपुरस्कारः एटले हलका माणसने पण मान आपवो पडे ठे. अर्थात् चारित्री साधुनी तो राजा, मंत्री, श्रेष्ठी प्रमुख लोको वंदनादिक वडे पूजा करे ठे, अने चारित्रथी ज्रष्ट थएल पुरुषने तो पोतानुं कार्य साधवा माटे हलका माणसनी पण हाजी करवी पडे, तेमज राजा अधर्मी होय तो ज्रष्टचारित्रीने वेठ प्रमुख दुःख पण खमवुं पडे. माटे गृहस्थाश्रममां शुं सुख ठे ? एवो विचार करवो. ए पांचमुं स्थान थयुं. ( ५ ) तेमज (वंतस्स के०) वान्तस्य एटले पूर्वे वमेला, त्याग करेला एवा विषयनुं (पडिआयणं के०) प्रत्यापानं एटले फरिथी पान करवुं ए निंद्य ठे. अर्थात् एवुं खावुं ए श्वानादि नीच प्राणिनो स्वज्ञाव ठे, सत्पुरुषो आ वातनी निंदा करे ठे, तेमज एथी दुःख तथा रोग थाय ठे. मे दीक्षाने अवसरे सर्व कामज्ञोग वम्या ठे, हवे जो एनुं पाठुं ग्रहण करीश तो ते एवुं खावा समान ठे. माटे गृहस्थाश्रम वडे शुं प्रयोजन ? एवो विचार करवो. ए ठठुं स्थान थयुं. ( ६ ) तेमज ( अहरगइवासोवसंपया के० ) अधरगतिवासोपसंपत् एटले संयमनो त्याग करवाथी नीच गतिने विषे जेथी स्थिति थाय एवा कर्मनुं बंधन थाय ठे. के जेथी नारकी तिर्यंच प्रमुख नीच गतिमां जवुं पडे ठे. माटे एवा गृहस्थाश्रम वडे शुं प्रयोजन ? एवो विचार करवो. ए सातमुं स्थान थयुं. (७) तेमज (गिहवासमज्झे के०) गृहपाशमध्ये एटले घरमां पासा सरखा स्त्री पुत्र

वगेरे परिवारमां ( वसंताणं के० ) वसतां एटले रहेता एवा ( गिहिणं के० ) धर्मः एटले धर्म
णां एटले गृहस्थोने प्रमाद घणा होवाथी ( धम्मे के० ) ( सुलहे के० ) निश्चे. जो ए
( दुल्लहे के० ) दुर्लभः एटले दुर्लभ छे. ( गमु के० ) स्नेहबंधनमां पडे छे,
आमंत्रणने अर्थे छे. अर्थात् गृहस्थो घगर कारणे एवा विचार करवो. ए आठमुं स्थान
एवा गृहस्थाश्रमवडे शुं प्रयोजन ? एवो विचार करवो. आतङ्कः एटले शीघ्र मृत्यु आपे एवो विषूचिका
( ७ ) तेमज ( आयंके के० ) आतङ्कः एटले शीघ्र मृत्यु आपे एवो विषूचिका
रोग जे ते ( से के०) तस्य एटले हे धर्मवंधुरहित एवा गृहस्थना ( वहाय के
धाय एटले वधने अर्थ ( होइ के० ) भवति एटले थाय छे. माटे गृहस्थाश्र
प्रयोजन ? एवो विचार करवो. ए नवमुं स्थान थयुं. ( ९ ) तेमज ( संकप्पे
कल्पः एटले इष्ट वस्तुना वियोगथी अने अनिष्ट वस्तुनी प्राप्तिथी मनमां
खो जे संकल्प विकल्प थाय छे ते ( से के० ) तस्य एटले ते गृहस्थना ( व
वधाय एटले वधने अर्थे ( होइ के० ) भवति एटले थाय छे. अर्थात् मिथ्या
विकल्पथी गृहस्थ पोताना घरनो नाश करे छे, माटे एवा गृहस्थाश्रम वडे
जन ? एवो विचार करवो. ए दशमुं स्थान थयुं. ( १० ) तेमज ( गिहि
गृहिवासः एटले गृहस्थाश्रम जे ते ( सोवक्केसे के० ) सोपक्लेशः एटले क
अर्थात् गृहस्थाश्रममां खेती, व्यापार प्रमुख सर्व साधनो घणा दुःखदा
तथा घृत लवण विगेरे वस्तुनी चिंता गृहस्थने राखवी पडे छे, तेथी स
स्याश्रमने क्लेशवालो गणे छे. माटे एवा गृहस्थाश्रम वडे शुं प्रयोजन ?
करवो. ए अग्यारमुं स्थान थयुं. ( ११ ) तेमज ( परिआए
चारित्र पर्याय जे ते ( निरुवक्केसे के० ) निरुपक्लेशः एटले
क्लेश एमां नथी. माटे एवुं चारित्र मूकी गृहस्थाश्रम स्वीकारवामां
विचार करवो. आ बारमुं स्थान थयुं. (१२) तेमज ( गिहिवासे के
एटले गृहस्थाश्रम जे ते ( बंधे के० ) बन्धः एटले कर्मबन्धन
कर्मबन्धन करनारा व्यापार जेमां करवा पडे छे. एवा गृहस्था
प्रयोजन ? एवो विचार करवो. ए तेरमुं स्थान थयुं. ( १३ ) ते
के० ) पर्यायः एटले चारित्र पर्याय जे ते ( मुक्के के० ) मोक्षः ए
छुडावनार होवाथी मोक्षरूप छे. माटे गृहस्थाश्रम वडे शुं प्रयोज
करवो. ए चउदमुं स्थान थयुं. (१४) तेमज ( गिहिवासे के० )
गृहस्थाश्रम जे ते ( सावज्जे के० ) सावद्यः एटले प्राणातिपात प्र
वालो छे. माटे ए गृहस्थाश्रमवडे मने शुं प्रयोजन ? एवो

रमुं स्थानक थयुं. ( १५ ) तेमज ( परिआए के० ) पर्यायः एटले चारित्रपर्याय
अणवज्जे के० ) अवनद्यः एटले पापरहित ठे. माटे गृहस्थाश्रम वडे शुं प्रयोजन?
ो विचार करवो. ए सोलमुं स्थानक थयुं. (१६) तेमज ( गिहिणं के० ) गृहिणां
ले गृहस्थना ( कामन्नोगा के० ) कामन्नोगाः एटले कामन्नोग जे ते ( बहुसाहा-
ा के० ) बहुसाधारणाः एटले चोर, जार, राजा विगेरेने सरखा ज ठे. माटे एवा
ृस्थाश्रम वडे शुं प्रयोजन ? एवो विचार करवो. ए सत्तरमुं स्थानक थयुं. (१७)
नज गृहस्थाश्रममां ( पुन्नपावं के० ) पुण्यपापं एटले पुण्य पाप जे ते ( पत्तेअं के०)
येकं एटले जे करे तेने ठे. अर्थात् माता, पिता स्त्री इत्यादिकने अर्थे करेलुं पाप
करे ठे तेनेज लागे ठे. ( न्नो के० ) अरे ( मणुआण के० ) मनुजानां एटले मनु-
ोनुं ( जीविए के० ) जीवितं एटले आयुष्य जे ते ( अणिच्चे के० ) अनित्यं एटले
नित्य एवुं ( खलु के० ) निश्चये ठे. कारण के, ते आयुष्य ( कुसग्गजलबिंडुचंचले
) कुशाग्रजलबिंडुचंचलं एटले दर्ज्ननी अणी उपर रहेला जलबिंडु समान ठे.
र्थात् उपक्रम घणा होवाथी आउखुं जलबिंडुसमान चंचल ठे. (च के०) पुनः (न्नो
०) अरे ! मे (बहुं के) बहु एटले घणुं (पावं के०) पापं एटले पाप अर्थात् संक्लेश-
लुं एवुं ( कम्मं खलु के० ) कर्म खलु एटले चारित्र मोहनीय प्रमुख कर्म जे
ज ( पगडं के० ) प्रकृतं एटले कर्खुं ठे. जेथी चारित्र लीधा पठी पण मने एवी
ड बुद्धि उत्पन्न थाय ठे. ( च के० ) पुनः ( न्नो के० ) अरे ( पुव्विं के० ) पूर्वं
टले पूर्वे ( कडाणं के० ) कृतानां एटले करेला एवा ( पावाणं कम्माणं के० )
पानां कर्मणाम् एटले ज्ञानावरणीयादि तथा अशातावेदनीयादि पापकर्मोनुं तथा
डुच्चिणाणं के० ) डुश्चरितानां एटले पूर्वन्नवे प्रमादकपायादिकना वशथी मद्यपान
... जे दुष्टकर्म करेला होय तेमनुं तथा ( डुप्पडिकंताणं के० ) डुःपराक्रान्तानां
... मिथ्यात्व, अविरति विगेरेथी प्राणिवध प्रमुख जे कर्म कर्खा होय तेमनुं फल
... खलु के० ) वेदयित्वा खलु एटले न्नोगव्या पठीज ( मुक्खो के० ) मोक्षः
... मोक्ष थाय ठे. पण ( अवेइत्ता के० ) अवेदयित्वा एटले पूर्वोक्त कर्म न्नो-
... विना मोक्ष ( नत्थि के० ) नास्ति एटले नथी. ( वा के० ) अथवा पूर्वोक्त क-
... तवसा के० ) तपसा एटले अनशन प्रमुख तपस्या वडे ( जोसइत्ता के० )
...त्वा एटले खपावीनेज मोक्ष थाय ठे, ते विना थतो नथी. ए ( अट्ठारसमं
... अष्टादशं, एटले अढारमुं ( पयं के० ) पदं एटले पद ( न्नवइ के० ) न्नवति
... थाय ठे. ॥१७॥ ( च के० ) पुनः (अत्र के०) आ अढार स्थानकमां कहेल वात
... सिलोगो के० ) श्लोकः एटले श्लोक जे ते ( न्नवइ के० ) न्नवति एटले ठे.

अर्थात् अढार स्थानमां कहेली तथा न कहेली वातनो संग्रह करनार श्लोक आगल कहीशुं ते छे. ॥

(दीपिका.) तत्र प्रथमं स्थानकमाह। तद्यथेत्युदाहरणे। हं जो दुःखमायां दुःप्रजीविन इति। हंजो शिष्यामन्त्रणे। दुःखमायामधमकालरूपायां कालदोषादेव दुःखेन कृच्छ्रेण प्रकर्षेण उदारजोगापेक्षया जीवितुं शीला दुःप्रजीविनः। प्राणिन इति गम्यते। नरेन्द्रादीनामप्यनेकदुःखप्रयोगदर्शनात्। उदारजोगरहितेन विडम्बनाप्रायेण कुगतिहेतुना किं गृहाश्रमेणेति संप्रत्युपेक्षितव्यमिति प्रथमं स्थानम् ॥१॥ अथ द्वितीयस्थानमाह। तथा लघव इत्वरा गृहिणां कामजोगाः। दुःखमायामिति गम्यते। सन्तोऽपि लघवस्तुछाः प्रकृत्यैव तुपमुष्टिवदसारा इत्वरा अल्पकाला गृहिणां गृहस्थानां कामजोगा मदनकामप्रधानाः शब्दादयो विषया विपाककटवश्च न देवानामिव विपरीताः। अतः किं गृहाश्रमेणेति संप्रत्युपेक्षितव्यमिति द्वितीयं स्थानम् ॥२॥ अथ तृतीयस्थानमाह। तथा जूयश्च शातबहुला मनुष्याः। जुक्तेष्वपि कामजोगेषु पुनरपि सुखाजिलाषिण एव मनुष्याः। अतः किं कामजोगैः। संप्रत्युपेक्षितव्यमिति तृतीयं स्थानम् ॥ ३ ॥ अथ चतुर्थस्थानमाह। तथा इदं च मे दुःखं न चिरकालोपस्थायि जविष्यति। इदं च अनुजूयमानं मम श्रामण्यमनुपालयतो दुःखं शारीरमानसं कर्मफलं परीषहजनितं चिरकालमुपस्थातुं शीलं न जविष्यति। श्रामण्यपालनेन परीषहनिराकरणात् कर्मनिर्जरणात् संयमराज्यस्य प्राप्तिः। इतरथा महानरकादौ विपर्ययः। अतः किं गृहाश्रमेणेति संप्रत्युपेक्षितव्यमिति चतुर्थं स्थानम् ॥ ४ ॥ अथ पञ्चमस्थानमाह। उमजणपुरक्कार इति। न्यूनजनपूजा। प्रव्रजितो हि धर्मप्रजावात् राजामात्यादिजिरज्युत्थानासनाञ्जलिप्रग्रहादिजिः पूज्यते। उत्प्रव्रजितेन तु न्यूनजनस्यापि स्वव्यसनगुप्तयेऽज्युत्थानादि कार्यम्। अधार्मिकराजविषये वा वेष्टिप्रायात् कुत्सरकर्मणो नियमत एव इहैव चेदमधर्मफलम्। अतः किं गृहाश्रमेणेति संप्रत्युपेक्षितव्यमिति पञ्चमं स्थानम्। एवं सर्वत्र योजनीयम् ॥ ५ ॥ अथ षष्ठं स्थानमाह। वान्तस्य प्रत्यापानं जुक्तोज्झितपरिजोग इत्यर्थः। अयं च श्वसृगालादिक्षुद्रप्राणिजिराचरितः सतां निन्द्यः पुनर्व्याधिदुःखजनकः। वान्ताश्च जोगाः प्रव्रज्याङ्गीकरणेन। एतत्प्रत्यापानमेवंजूतमेवं चिन्तनीयमिति षष्ठं स्थानम् ॥ ६ ॥ अथ सप्तमस्थानमाह। तथा अधोगतिवासोपसंपत्। अधोगतिर्नरकगतिस्तिर्यग्गतिर्वा तस्यां वसनमधोगतिवासः। एतन्निमित्तजूतं कर्म गृह्यते। तस्योपसंपत् सामीप्येनाङ्गीकरणं यदेतदुत्प्रव्रजनमेवं चिन्तनीयमिति सप्तमं स्थानम् ॥ ७ ॥ अ-

अष्टमं स्थानमाह । भो इत्यामन्त्रणे । गृहिणां गृहस्थानां धर्मः परमनिर्वृतिजनको दुर्लभ एव । किं कुर्वतां गृहिणाम् । गृहपाशमध्ये वसताम् । अत्र गृहशब्देन पाशकल्पाः पुत्रकलत्रादयो गृह्यन्ते । तन्मध्ये वसतामनादिभवाभ्यासादकारणं स्नेहबन्धनमेतच्चिन्तनीयमित्यष्टमं स्थानम् ॥ ८ ॥ अथ नवमस्थानमाह । तथा आतङ्कः सद्योघाती विषूचिकादिरोगः । से इति तस्य गृहिणो धर्मबन्धुरहितस्य वधाय विनाशाय भवति । तथाविधवधश्चानेकवधहेतुरेवं चिन्तनीयमिति नवमं स्थानम् ॥९॥ अथ दशमं स्थानमाह । तथा संकल्प इष्टानिष्टविप्रयोगप्राप्तेर्यो मनःसंबन्धी आतङ्कः स तस्य गृहिणः तथाचेष्टायोगात् मिथ्याविकल्पाभ्यासेन ग्रहादिप्राप्तेर्वधाय भवत्येतच्चिन्तनीयमिति दशमं स्थानम् ॥१०॥ अथैकादशं स्थानमाह । गृहवासो गृहाश्रमः सोपक्लेशः सह उपक्लेशेन वर्तते यः स सोपक्लेशः । उपक्लेशाः कृषिपाशुपाल्यवाणिज्याद्यनुष्ठानगताः पण्डितजनगर्हिताः शीतोष्णश्रमादयो घृतलवणचिन्तादयश्चेत्येवं चिन्तनीयमित्येकादशं स्थानम् ॥ ११ ॥ अथ द्वादशं स्थानमाह । पर्याय एभिरेवोपक्लेशै रहितः । दीक्षापर्यायोऽनारम्भी चिन्तापरिवर्जितः श्लाघनीयो विदुषामिति चिन्तनीयमिति द्वादशं स्थानम् ॥ १२ ॥ अथ त्रयोदशं स्थानमाह । तथा बन्धो गृहवासः । सदा तद्धेत्वनुष्ठानात् कोशकारकीटवदित्येवं चिन्तनीयमिति त्रयोदशं स्थानम् ॥ १३ ॥ अथ चतुर्दशं स्थानमाह । तथा पर्यायो मोक्षो निरन्तरं कर्मनिगडानामपगमनेन मुक्तवदित्येवं चिन्तनीयमिति चतुर्दशं स्थानम् ॥ १४ ॥ अथ पञ्चदशं स्थानमाह । अत एव गृहवासः सावद्यः सपापः प्राणातिपातमृषावादादीनां पञ्चानामाश्रवाणां सेवनादिति चिन्तनीयमिति पञ्चदशं स्थानम् ॥ १५ ॥ अथ षोडशं स्थानमाह । पर्याय एवानवद्योऽपापोऽहिंसादिपालनात्मकत्वादेतच्चिन्तनीयमिति षोडशं स्थानम् ॥ १६ ॥ अथ सप्तदशं स्थानमाह । बहुसाधारणा गृहिणां कामभोगा इति । गृहिणां गृहस्थानां कामभोगाः साधारणाश्चौरराजकुलादिसामान्याः । पूर्ववदेतच्चिन्तनीयमिति सप्तदशं स्थानम् ॥ १७ ॥ अथाष्टादशं स्थानमाह । तथा प्रत्येकं पुण्यपापमिति । मातापितृकलत्रादिनिमित्तमप्यनुष्ठितं पुण्यपापं प्रत्येकं पृथक् पृथक् येनानुष्ठितं तस्य कर्तुरेव तदिति भावार्थः । एवमष्टादशं स्थानम् ॥ १८ ॥ भवइ अ इत्थ सिलोगो । भवति चात्र श्लोकः । अत्रेति अष्टादशस्थानानां संबन्धे । उक्तानुक्तसंग्रहपर इत्यर्थः । श्लोक इति च जातिनिर्देशस्तेन श्लोकजातिरनेकभेदा भवतीति प्रभूतश्लोकोपन्यासेऽपि न विरोधः ॥

---

(टीका.) तथेत्यादि । तथेत्युपन्यासार्थः । ईतो दुःषमायां दुःप्रजीविन

वियोगप्रातिजो मानस आतङ्कः। तस्य गृहिणस्तथाचेष्टायोगान्मिथ्याविकल्पाभ्यासेन गृहादिप्राप्तेर्वधाय जवत्येतच्चिन्तनीयमिति दशमं स्थानम् ॥१०॥ तथा सोपक्लेशो गृहिवास इति। सहोपक्लेशैः सोपक्लेशो गृहाश्रमः। उपक्लेशाः। कृषिपाशुपाल्यवाणिज्याद्यनुष्ठानानुगताः पण्डितजनगर्हिताः शीतोष्णश्रमादयो घृतलवणचिन्तादयश्चेत्येवं चिन्तनीयमित्येकादशं स्थानम् ॥११॥ तथा निरुपक्लेशः पर्याय इति। एभिरेवोपक्लेशैरहितः प्रव्रज्यापर्यायः। अनारम्भी कुचिन्तापरिवर्जितः श्लाघनीयो विदुषामित्येवं चिन्तनीयमिति द्वादशं स्थानम् ॥१२॥ तथा बन्धो गृहिवासस्तद्धेत्वनुष्ठानात् कोशकारकीटवदित्येतच्चिन्तनीयमिति त्रयोदशं स्थानम् ॥ १३ ॥ ॥ तथा मोक्षः पर्यायोऽनवरतं कर्मनिगडविगमान्मुक्तवदित्येवं चिन्तनीयमिति चतुर्दशं स्थानम् ॥ १४ ॥ ॥ अतएव सावद्यो गृहवास इति । सावद्यः सपापः प्राणातिपातमृषावादादिप्रवृत्तेरेतच्चिन्तनीयमिति पञ्चदशं स्थानम् ॥ १५ ॥ एवमनवद्यः पर्याय इत्यपाप इत्यर्थः। अहिंसादिपालनात्मकत्वादेतच्चिन्तनीयमिति षोडशं स्थानम् ॥ १६ ॥ तथा बहुसाधारणा गृहिणां कामजोगा इति । बहुसाधारणाश्चौरजारराजकुलादिसामान्या गृहिणां गृहस्थानां कामजोगाः। पूर्ववदित्येतच्चिन्तनीयमिति सप्तदशं स्थानम् ॥ १७ ॥ तथा प्रत्येकं पुण्यपापमिति । मातापितृकलत्रादिनिमित्तमप्यनुष्ठितं पुण्यपापं प्रत्येकं प्रत्येकं पृथक् पृथक् येनानुष्ठितं तस्य कर्तुरेवैतदिति जावार्थः । एवमष्टादशं स्थानम् ॥ १८ ॥ एतदन्तर्गतो वृद्धाजिप्रायेण शेषग्रन्थः समस्तोऽत्रैव । अन्ये तु व्याचक्षते। सोपक्लेशो गृहिवास इत्यादिषु षट्सु स्थानेषु सप्रतिपक्षेषु स्थानत्रयं गृह्यते। एवं च। बहुसाधारणा गृहिणां कामजोगा इति चतुर्दशं स्थानम् ॥१४॥ प्रत्येकं पुण्यपापमिति पञ्चदशं स्थानम् ॥१५॥ शेषाण्यजिधीयन्ते। तथा अनित्यं खलु अनित्यमेव नियमतः। जो इत्यामन्त्रणे। मनुष्याणां पुंसां जीवितमायुः। एतदेव विशेष्यते। कुशाग्रजलबिन्दुचञ्चलं सोपक्रमत्वादनेकोपद्रवविषयत्वादत्यन्तासारम्। तदलं गृहाश्रमेणेति संप्रत्युपेक्षितव्यमिति षोडशं स्थानम् ॥१६॥ तथा बहु च खलु जो पापं कर्म प्रकृतम्। बहु च। चशब्दात् क्लिष्टम्। खलुशब्दोऽवधारणे। बह्वेव पापं कर्म चारित्रमोहनीयादि प्रकृतं निर्वर्तितं मयेति गम्यते। श्रामण्यप्राप्तावप्येवं क्षुद्रबुद्धिप्रवृत्तेः। नहि प्रजूतक्लिष्टकर्मरहितानामेवमकुशला बुद्धिर्जवत्यतो न किंचित् गृहाश्रमेणेति संप्रत्युपेक्षितव्यमिति सप्तदशं स्थानम्। तथा पापानां चेत्यादि । पापानां चापुण्यरूपाणां चशब्दात्पुण्यरूपाणां च खलु जो कृतानां कर्मणाम्। खलुशब्दः कारितानुमतविशेषणार्थः। जो इति शिष्यामन्त्रणे। कृतानां मनोवाक्काययोगैरोघतो निर्वर्तितानां कर्मणां ज्ञानावरणीयाद्यशातवेदनीयादीनां प्राक् पूर्वमन्यजन्मसु दुश्चरितानाम्। प्रमादकषायजदुश्चरितजनितानि दुश्च-

रितानि । कारणे कार्योपचारात् । दुश्चरितहेतूनिं वा दुश्चरितानि । कार्ये कारणोपचारात् । एवं दुःपराक्रान्तानां मिथ्यादर्शनाविरतिजदुःपराक्रान्तजनितानि दुःपराक्रान्तानि । हेतौ फलोपचारात् । दुःपराक्रान्तहेतूनि वा दुःपराक्रान्तानि फले हेतूपचारात् । इह च दुश्चरितानि मद्यपानाश्लीलानृतजापणादीनि । दुःपराक्रान्तानि वधबन्धनादीनि । तदमीषामेवंभूतानां कर्मणां वेदयित्वानुभूय । फलमिति वाक्यशेषः । किम् । मोक्षो भवति प्रधानपुरुषार्थो भवति । नास्त्यवेदयित्वा न भवत्यननुभूय । अनेन सकर्मकमोक्षव्यवच्छेदमाह । इष्यते च क्षपकर्मर्पितानां कैश्चिरसहकारिनिरोधतस्तत्फलादानशक्तिस्तत्तदपि नास्त्यवेदयित्वा मोक्षस्तथारूपत्वात् । कर्मणः स्वफलादाने कर्मत्वायोगात् । तपसा वा क्षपयित्वा अनशनप्रायश्चित्तादिना वा विशिष्टक्षायोपशमिकशुभभावरूपेण तपसा प्रलयं नीत्वा । इह च वेदनमुदयप्राप्तस्य व्याधेरिवानारब्धोपक्रमस्य क्रमशोऽनन्यनिबन्धनपरिक्लेशेन तपः । क्षपणं तु सम्यगुपक्रमेणानुदीर्णोदीरणदोपक्षगादन्यनिमित्तमक्रमेणापरिक्लेशमित्यतस्तपोऽनुष्ठानमेव श्रेय इति न किंचिद्गृहाश्रमेणेति संप्रत्युपेक्षितव्यमित्यष्टादशं पदं भवत्यष्टादशं स्थानं भवति । भवति चात्र श्लोकः । अत्रैतदष्टादशस्थानार्थव्यतिकर उक्तानुक्तार्थसंग्रहपर इत्यर्थः । श्लोक इति च जातिपरो निर्देशः । ततः श्लोकजातिरनेकभेदा भवतीति प्रभूतश्लोकोपन्यासेऽपि न विरोधः ॥

जया य चयई धम्मं, अणज्जो भोगकारणा ॥
से तत्थ मुच्छिए बाले, आयइं नावबुज्झइ ॥ १ ॥

( अवचूरिः ) यदा चैवमष्टादशव्यावर्त्तनकारणभावेऽपि त्यजति चारित्रधर्मम नार्यो म्लेच्छचेष्टितः स तेषु भोगेषु मूर्छितो बालोऽज्ञ आगामिकालं नावबुध्यते ॥ १ ॥

( अर्थ. ) ते आ रीते. जया अ इत्यादिसूत्र. उपर कहेल अढार स्थानक विचारवा योग्य छता पण ( अणज्जो के० ) अनार्यः एटले म्लेच्छ नथी पण म्लेच्छ सरखा छे साधु ( भोगकारणा के० ) भोगकारणात् एटले शब्द, स्पर्श प्रमुख विषय भोगवनाना हेतुथी ( धम्मं के० ) धर्मं एटले चारित्र धर्म प्रत्ये ( जया के० ) यदा एटले ज्यारे ( चयइ के० ) त्यजति एटले त्याग करे. त्यारे ( बाले के० ) बालः एटले अज्ञ एवा ( से के० ) सः एटले ते साधु ( तत्थ के० ) तत्र एटले ते शब्द प्रमुख विषयोने विषे ( मुच्छिए के० ) मूर्छितः एटले मूर्छा करता छता ( आयइं के० ) आयतिं एटले आवता काल प्रत्ये ( नावबुज्झइ के० ) नावबुध्यते एटले मनमा समजे नहि. ॥ १ ॥

(दीपिका.) यदा चैवमष्टादशसु स्थानेषु व्यावर्त्तनकारणेषु सत्स्वपि यो बालोऽज्ञो धर्मं चारित्रलक्षणं जहाति त्यजति । स आयतिमागामिकालं नावबुध्यते सम्यग् नावगच्छति । किंभूतो बालः । अनार्य इव अनार्यो म्लेच्छचेष्टितः । किमर्थं धर्मं त्यजतीत्याह । भोगकारणाय शब्दादिभोगनिमित्तम् । किंभूतो बालः । तत्र मूर्छितः । तेषु भोगेषु मूर्छितो गृद्धः ॥ १ ॥

(टीका.) जया अ त्ति सूत्रम् । अस्य व्याख्या । यदा चैवमप्यष्टादशसु व्यावर्त्तनकारणेषु सत्स्वपि जहाति त्यजति धर्मं चारित्रलक्षणम् । अनार्य इत्यनार्य इवानार्यो म्लेच्छचेष्टितः । किमर्थमित्याह । भोगकारणाच्छब्दादिभोगनिमित्तं स धर्मत्यागी तत्र तेषु भोगेषु मूर्छितो गृद्धो बालोऽज्ञ आयतिमागामिकालं नावबुध्यते न सम्यगवगच्छतीति सूत्रार्थः ॥ १ ॥

जया ओहाविओ होइ, इंदो वा पडिओ छमं ॥
सवधम्मपरिब्भठो, स पछा परितप्पइ ॥ २ ॥

(अवचूरिः) यदावधावितोऽपसृतो भवति संयमसुखविभूतेः । उत्प्रव्रजित इत्यर्थः । इन्द्रवत्पतितः क्ष्मां स्वविभवभ्रंशात् । सर्वधर्मेभ्यः परिभ्रष्टः स पश्चाद्भ्रष्टो भूत्वा मनाग्मोहावसाने परितप्यते ॥ २ ॥

(अर्थ.) तेज कहे छे. जया इत्यादि सूत्र. (छमं के०) क्ष्मां एटले भूमिने विषे (पडिओ के०) पतितः एटले पडेला एवा (इंदो वा के०) इंद्रो वा एटले देवराज इंद्रनी पेठे अर्थात् इंद्र जेम पोताना इंद्रपदथी भ्रष्ट थइने आ मृत्युलोकमां पतन पामे, तेम (जया के०) यदा एटले ज्यारे पूर्वोक्त साधु जे ते (ओहाविओ के०) अवधावितः एटले नीकली गएला, अर्थात् चारित्रथी भ्रष्ट एवा (होइ के०) भवति एटले थाय छे. त्यारे (स के०) सः एटले ते साधु (सवधम्मपरिब्भठो के०) सर्वधर्मपरिभ्रष्टः एटले खंति, अज्जव, मद्दव प्रमुख पूर्वे आचरेला सर्व धर्मथी परिभ्रष्ट थया छता (पछा के०) पश्चात् एटले पाछलथी (परितप्पइ के०) परितप्यते एटले 'आ में शुं कर्युं' एवी रीते पस्तावो करे छे. ॥ २ ॥

(दीपिका.) एतदेव दर्शयति । यदा चावधावितोऽपसृतो भवति यः । कोऽर्थः । संयमसुखविभूतेः सकाशादुत्प्रव्रजित इत्यर्थः । तदा इन्द्रो वा देवराज इव क्ष्मां पतितः । स्वविमानविभवभ्रंशेन भूमौ पतित इति भावः । किं० यः । सर्वधर्मपरिभ्रष्टः । सर्वधर्मेभ्यः क्षान्त्यादिभ्य आसेवितेभ्योऽपि यावत्प्रतिज्ञमननुपालनात् । ओकिंकेभ्यो

वा गौरवादिन्यः परिभ्रष्टः सर्वतश्च्युतः । पतितो नूत्वा पश्चात् मनाग् मोहस्यान्ते स परितप्यते । किमिदं मया कार्यं कृतमित्यनुतापं करोति ॥ २ ॥

( टीका. ) एतदेव दर्शयति । जय त्ति सूत्रम् । व्याख्या । यदा चावधावितोऽपसृतो नवति संयमसुखविनूतेः । उत्प्रव्रजित इत्यर्थः । इन्डो वेति देवराज इव पतितः क्ष्मां गतः स्वविनवभ्रंशेन नूमौ पतित इति नावः । क्ष्मा नूमिः । सर्वधर्मपरिभ्रष्टः सर्वधर्मेन्यः क्षान्त्यादिन्य आसेवितेन्योऽपि यावत्प्रतिज्ञमननुपालनात् लौकिकेन्योऽपि वा गौरवादिन्यः परिभ्रष्टः सर्वतश्च्युतः स पतितो नूत्वा पश्चान्मनाग् मोहावसाने परितप्यते । किमिदमकार्यं मयानुष्ठितमित्यनुतापं करोतीति सूत्रार्थः ॥ २ ॥

जया अ वंदिमो होइ, पछा होइ अवंदिमो ॥
देवया व चुआ ठाणा, स पछा परितप्पइ ॥ ३ ॥

( अवचूरिः ) यदा च वन्द्यो नवति श्रमणपर्यायस्थो नरेन्डादीनां पश्चात्प्रत्युन्निष्क्रान्तः सन्नवन्द्यः । तदा च देवतेव स्थानच्युता सती पश्चात्परितप्यत इति पूर्ववत् ॥ ३ ॥

( अर्थ. ) जे साधु ( जया के० ) यदा एटले ज्यारे चारित्र रूडी रीते पालता होय त्यारे प्रथम तो ( वंदिर्ड के० ) वन्द्यः एटले वंदना करवाने योग्य एवा ( होइ के० ) नवति एटले थाय. ( य के० ) च एटले अने ( पछा के० ) पश्चात् एटले पाछलथी अर्थात् चारित्रनो त्याग करे त्यारे ( अवंदिमो के० ) अवन्द्यः एटले वन्दना करवा योग्य नहि एवा ( होइ के० ) नवति एटले थाय. ( स के० ) सः एटले ते साधु ( ठाणा के० ) स्थानात् एटले पोताना स्थानकथी ( चुआ के० ) च्युता एटले भ्रष्ट थएल एवी (देवया व के०) देवतेव एटले देवतानी पेठे (पछा के०) पश्चात् एटले पाछलथी ( परितप्पइ के० ) परितप्यते एटले पस्तावो करे छे. ॥ ३ ॥

( दीपिका. ) यदा च यः संयमवान् सन् नरेन्डादीनां वन्द्यो नवति । स पश्चाडुन्निष्क्रान्तः संयमरहितः सन्नवन्द्यो नवति । पश्चात् स परितप्यते च । किंवत् । स्थानच्युता सती इन्डवर्जा देवतेव । परितापार्थः पूर्ववत् ॥ ३ ॥

( टीका. ) जया अ त्ति सूत्रम् । अस्य व्याख्या । यदा च वन्द्यो नवति । श्रमणपर्यायस्थो नरेन्डादीनां पश्चान्नत्युन्निष्क्रान्तः सन्नवन्द्यस्तदा देवतेव का चिदिन्डवर्जा स्थानच्युता सती । स पश्चात्परितप्यत इत्येतत्पूर्ववदेवेति सूत्रार्थः ॥ ३ ॥

जया अ पूइमो होइ, पछा होइ अपूइमो ॥
राया व रज्जपब्भट्ठो, स पछा परितप्पइ ॥ ४ ॥

( अवचूरिः ) यदा च पूज्यो वस्त्रभक्ताद्यैर्लोकानामिति शेषः । पश्चाद्भवत्युत्प्रव्रजितः सन्नपूज्यः । राजेव राज्यप्रभ्रष्टो महतो भोगर्द्धिप्रमुक्तः । स पश्चात्परितप्यते ॥ ४ ॥

( अर्थ. ) तेमज जया इत्यादि सूत्र. ( अ के० ) च एटले वळी जे साधु चारित्रना प्रभावथी प्रथम ( जया के० ) यदा एटले ज्यारे ( पूइमो के० ) पूज्यः एटले पूजा करवा योग्य एवा ( होइ के० ) भवति एटले थाय छे. अने ( पछा के० ) पश्चात् एटले चारित्रथी भ्रष्ट थया पछी ( अपूइमो के० ) अपूज्यः एटले पूजा करवा योग्य नहि एवा ( होइ के० ) भवति एटले थाय छे. ( स के० ) सः एटले ते साधु ( रज्जपब्भट्ठो के० ) राज्यप्रभ्रष्टः एटले राज्यथी भ्रष्ट थएल एवा ( राया व के० ) राजेव एटले राजानी पेठे ( पछा के० ) पश्चात् एटले पाछळथी ( परितप्पइ के० ) परितप्यते एटले पस्ताय छे. ॥ ४ ॥

(दीपिका.) यदा च पूज्यो भवति लोकानां वस्त्रपात्रादिभिः । कुतः । साधुधर्ममाहात्म्यात् । स उत्प्रव्रजितः सन्नपूज्यो भवति लोकानामेव । क इव । राज्यप्रभ्रष्टो महतो भोगर्द्धियुक्तो राजेवापूज्यो भवति । पुनः स पश्चात् परितप्यते च पूर्ववत् ॥ ४ ॥

( टीका. ) तथा जय त्ति सूत्रम् । अस्य व्याख्या । यदा च पूज्यो भवति वस्त्रभक्तादिभिः श्रामण्यसामर्थ्याल्लोकानां पश्चाद्भवत्युत्प्रव्रजितः सन्नपूज्यो लोकानामेव । तदा राजेव राज्यप्रभ्रष्टः । महतो भोगर्द्धिप्रमुक्तः स पश्चात्परितप्यत इति पूर्ववद्देवेति सूत्रार्थः ॥ ४ ॥

जया अ माणिमो होइ, पछा होइ अमाणिमो ॥
सिट्ठि व कब्बडे छूढो, स पछा परितप्पइ ॥ ५ ॥

( अवचूरिः ) यदा च मान्योऽभ्युत्थानाज्ञाकरणादिना । पश्चाद्भवत्यमान्यस्तत्त्यागेन । तदा श्रेष्ठीव कर्वटे क्षुद्रसन्निवेशे क्षिप्तः सन्परितप्यते ॥ ५ ॥

( अर्थ. ) तेमज जया इत्यादि सूत्र. ( अ के० ) च एटले वळी जे साधु चारित्रना प्रभावथी प्रथम ( जया के० ) यदा एटले ज्यारे ( माणिमो के० ) मान्यः एटले आसन आपवुं, आज्ञा मानवी इत्यादि प्रकार वडे मान आपवा योग्य थाय छे, अने ( पछा के० ) पश्चात् एटले शीलथी भ्रष्ट थया पछी ( अमाणिमो के० ) अमान्यः एटले मान आपवा योग्य नहि एवा ( होइ के० ) भवति एटले थाय छे.

( स के० ) सः एटले ते साधु ( कब्बडे के० ) कर्वटे एटले घणा ज क्षुद्र एवा गाम ठामां ( बूढो के० ) क्षिप्तः एटले पडेलो एवा ( सिट्ठि व के० ) श्रेष्ठीव एटले श्रेष्ठिनी पेठे ( पच्छा के० ) पश्चात् एटले पाछलथी ( परितप्पइ के० ) परितप्य एटले पस्ताय छे ॥ ५ ॥

( दीपिका. ) यदा च मान्यो जवत्यच्युत्थानाज्ञाकरणादिना माननीयः स्यात् शीलादिप्रजावेन । पश्चाछीलादिपरित्यागेनामान्यः स्यात् । किंवत् । श्रेष्ठिवत् । श्रेष्ठीव यथा श्रेष्ठी कर्वटे क्षिप्तो महाक्षुद्रसंनिवेशे क्षिप्तोऽमान्यो जवति । पुनः पश्चात् परितप्यते । तद्धीलादिपरित्याग्यपि ॥ ५ ॥

( टीका. ) तथा जय त्ति सूत्रम् । अस्य व्याख्या । यदा च मान्यो जवत्यच्युत्थानाज्ञाकरणादिना माननीयः शीलप्रजावेण, पश्चाद्भवत्यमान्यस्तत्परित्यागेन तदा श्रेष्ठीव कर्वटे महाक्षुद्रसंनिवेशे क्षिप्तः सन् पश्चात्परितप्यत इत्येतत्समानं पूर्वेणेति सूत्रार्थः ॥ ५ ॥

जया अ थेरउ होइ, समइक्कंतजुव्वणो ॥
मच्छु व्व गलिं गलित्ता, स पच्छा परितप्पइ ॥ ६ ॥

( अवचूरिः ) यदा च स्थविरो जवति स त्यक्तसंयमो वयःपरिणामेन । एतद्विशेषदर्शनायाह । समतिक्रान्तयौवन एकान्तस्थविरजावस्तदा विपाककटुत्वान्मत्स्य इव गलं गिलित्वाजिग्रह्य तथाविधकर्मलोहकंटकविद्धः सन् स पश्चात्परितप्यते । गाथेयं वृहद्वृत्तौ लघुवृत्तौ च नोक्ता ॥ ६ ॥

( अर्थ. ) जया इत्यादि सूत्र. ( अ के० ) च एटले वली जे साधु ( जया के० ) यदा एटले ज्यारे ( समइक्कंतजुव्वणो के० ) समतिक्रान्तयौवनः एटले नीकली गइ छे जुवान अवस्था जेमनी एवा अने माटेज ( थेरउ के० ) स्थविरः एटले सर्वथा वृद्ध थया थता संयमनो त्याग करे छे. ( स के० ) सः एटले ते साधु ( गलिं के० ) गलं एटले लोहडाना कांटा उपर राखेल मांसने ( गलित्ता के० ) गिलित्वा एटले गळीने ( व्व के० ) इव एटले जेम ( मच्छ के० ) मत्स्यः एटले मत्स्य पस्ताय छे, तेम विषय जोगनो परिणाम कडवो होवाथी ( पच्छा के० ) पश्चात् एटले पाछलथी ( परितप्पइ के० ) परितप्यते एटले पस्ताय छे. ॥ ६ ॥

( दीपिका. ) यदा च स्थविरो जवति मुक्तसंयमो वयसः परिणामेन । एतद्विशेषदर्शनायाह । किंजूतः स्थविरः । समतिक्रान्तयौवन एकान्तस्थविरजावः । तदा

भोगानां विपाककटुकत्वात् परितप्यते । क इव । मत्स्य इव । यथा मत्स्यो बडिशं गिलित्वा अभिगृह्य तथाविधकर्मलोहकंटकविद्धः सन् पश्चात् परितप्यत इति । एतदपि पूर्वेण समानम् ॥ ६ ॥

( टीका. ) जय त्ति सूत्रम् । अस्य व्याख्या । यदा च स्थविरो भवति स त्यक्तसंयमो वयःपरिणामेन । एतद्विशेषप्रतिपादनायाह । समतिक्रान्तयौवन एकान्तस्थविर इति भावः । तदा विपाककटुकत्वाद्भोगानां मत्स्य इव गलं बडिशं गिलित्वाभिगृह्य तथाविधकर्मलोहकंटकविद्धः सन्पश्चात्परितप्यत इत्येतदपि समानं पूर्वेणेति सूत्रार्थः ॥६॥

जया अ कुकुडुंबस्स, कुतत्तीहिं विहम्मइ ॥
हत्थी व बंधणे बद्धो, स पच्छा परितप्पइ ॥ ७ ॥

( अर्थ. ) एज प्रकट कहे छे. जया इत्यादि सूत्र. संयमनो त्याग करनार साधु ( जया के० ) यदा एटले ज्यारे ( कुकुडुंबस्स के० ) कुकुटुम्बस्य एटले माठा कुटुंबना परिवारनी ( कुतत्तीहिं के० ) कुतप्तिभिः एटले माठी चिंताउथी ( विहम्मइ के० ) विहन्यते एटले हणाय छे. त्यारे ( स के० ) सः एटले ते साधु (बंधणे के०) बन्धने एटले विषयनी लालचथी बन्धनमां ( बद्धो के० ) बद्धः एटले सपडाइ गएल एवा ( हत्थी व के० ) हस्तीव एटले हाथीनी पेठे ( पच्छा के० ) पश्चात् एटले पाछलथी ( परितप्पइ के० ) परितप्यते एटले पस्ताय छे. ॥ ७ ॥

( दीपिका. ) एतदेव स्पष्टयति । यदा च कुकुटुम्बस्य कुत्सितकुटुम्बस्य कुतप्तिभिः कुत्सितचिन्ताभिरात्मनः संतापकारिणीभिर्विहन्यते विषयभोगान् प्रति विघातं नीयते । तदा स मुक्तसंयमः सन् परितप्यते पश्चात् । क इव । यथा हस्ती कुकुटुम्बबन्धनबद्धः परितप्यते ॥ ७ ॥

पुत्तदारपरीकिन्नो, मोहसंताणसंतउ ॥
पंकोसन्नो जहा नागो, स पच्छा परितप्पइ ॥ ८ ॥

( अवचूरिः ) एतदेव स्पष्टयति । पुत्रदारपरिकीर्णो विषयसेवनात् पुत्रकलत्राद्भिः सर्वतो विक्षिप्तः । मोहसंतानसंततो मोहनीयकर्मप्रवाहेण व्याप्तः । पङ्कावसन्नो यथा नागः कर्दमनिमग्नो वनगज इव । स पश्चात्परितप्यते । हा हा किं मयेदमसमञ्जसमनुष्ठितमिति ॥ ८ ॥

१:– आ गाथा वृहद्वृत्तिमां तथा अवचूरिमां देखाती नथी.

( अर्थ. ) पुत्तदार इत्यादि सूत्र. संयमनो त्याग करनार ( स के० ) सः एटले ते साधु जे ते ( पुत्तदारपरीकिन्नो के० ) पुत्रदारपरिकीर्णः एटले पुत्र तथा स्त्रीयडे परिवरेलो अने ( मोहसंतानसंतर्ड के० ) मोहसंतानसंततः एटले दर्शनमोहिनी प्रमुख कर्मप्रवाहमां पडेलो एवो थयो ठतो ( जहा के० ) यथा एटले जेम ( पंकोसन्नो के० ) पङ्कावसन्नः एटले कादवमां खुती गएल एवो ( नागो के० ) नागः एटले हाथी पस्ताय छे, तेम (पछा के०) पश्चात् एटले पाछलथी ( परितप्पइ के० ) परितप्यते एटले पस्ताय छे. ॥ ८ ॥

( दीपिका. ) पुनराह । मुक्तसंयमः पश्चात्परितप्यते । हा हा किं मयेदमसमञ्जसमनुष्ठितम् । किं० । पुत्रदारपरिकीर्णः । विषयसेवनात्पुत्रकलत्रादिभिः सर्वतो विष्टितः । पुनः किंभूतः । मोहसंतानसंततो दर्शनमोहनीयादिकर्मप्रवाहेण संततः । क इव परितप्यते । यथा नागो हस्ती पङ्कावसन्नः कर्दममग्नः सन् परितप्यते ॥ ८ ॥

( टीका. ) एतदेव स्पष्टयति । पुत्तदार त्ति सूत्रम् । अस्य व्याख्या । पुत्रदारपरिकीर्णो विषयसेवनात्पुत्रकलत्रादिभिः सर्वतो विष्टितः । मोहसंतानसंततो दर्शनादिमोहनीयकर्मप्रवाहेण व्याप्तः । क इव । पङ्कावसन्नो नागो यथा कर्दमावमग्नो वनगज इव । स पश्चात्परितप्यते । हा हा किं मयेदमसमञ्जसमनुष्ठितमिति सूत्रार्थः ॥ ८ ॥

अज्ज आहं गणी हुंतो, भावित्र्पा बहुस्सुओ ॥
जइ हं रमंतो परिआए, सामन्ने जिणदेसिए ॥ ९ ॥

( अवचूरिः ) कश्चित्सचेतन एवं तप्यत इत्याह । अद्यास्मिन् दिवसेऽहमाचार्यो भवेयं भावितात्मा प्रशस्तयोगभावनाभिः बहुश्रुत उभयलोकहितश्चागमयुक्तो यद्यहमरमिष्यं रतिमकरिष्यम् । पर्याये प्रव्रज्यारूपे श्रामण्ये श्रमणसंबन्धिनि जिनदेशिते ॥ ९ ॥

( अर्थ. ) कोइ सचेतन थकी एवी रीते पस्ताय एम कहे छे. अज्ज इत्यादि सूत्र. ( अहं के० ) अहं एटले हुं ( अज्ज आ के० ) अद्य तावत् एटले आजसुधीमां ( गणी के० ) गणिः एटले आचार्य ( हुंतो के० ) स्यां एटले थात. शुं करतो थको ते कहे छे. ( जइ के० ) यदि एटले जो ( अहं के० ) अहं एटले हुं ( भावित्र्पा के० ) भावितात्मा एटले शुभयोगनी भावना वडे आत्माने विषे भावना करनारो एवो अने ( बहुस्सुओ के० ) बहुश्रुतः एटले आ लोक परलोकने विषे हितकारी अग्यार अंग प्रमुख बहु आगमने धारण करतो थतो ( जिणदेसिए के० )

जिनदेशिते एटले जिनभगवाने उपदेश करेल एवा, ( सामन्ने के० ) श्रामण्ये एटले श्रमण संबंधी ( परिआए के० ) पर्याये एटले चारित्र पर्यायने विषे ( रमंतो के० ) अरमिष्यं एटले रमी रहत, अर्थात् रूडी रीते चारित्र पालत तो आचार्य थात. ॥ ए॥

( दीपिका. ) कश्चित् सचेतनो नर एवं च परितप्यत इत्याह। अहमद्य तावदस्मिन् दिवसे गणी स्यामाचार्यो भवेयम्। यदि पर्याये प्रव्रज्यारूपे अरमिष्यं रतिमकरिष्यम्। किंविशिष्टे पर्याये। श्रामण्ये श्रमणसंबन्धिनि। पुनः किंभूते। जिनदेशिते तीर्थंकरप्ररूपिते। न शाक्यादिरूपे। किंभूतोऽहम्। भावितात्मा। प्रशस्तयोगभावनाभिर्भावित आत्मा यस्य सः। पुनः किंभूतः। बहुश्रुतः। उभयलोकहितबह्वागमयुक्त इति ॥ ए ॥

(टीका.) कश्चित् सचेतनतर एवं च परितप्यत इत्याह। अज्ज त्ति सूत्रम्। अस्य व्याख्या। अद्य तावदहमद्यास्मिन् दिवसे। अहमित्यात्मनिर्देशे। गणी स्यामाचार्यो भवेयम्। भावितात्मा प्रशस्तयोगभावनाभिः। बहुश्रुत उभयलोकहितबह्वागमयुक्तः। यदि किं स्यादित्यत आह। यद्यहमरमिष्यं रतिमकरिष्यं पर्याये प्रव्रज्यारूपे। सोऽनेकभेद इत्याह। श्रामण्ये श्रमणानां संबन्धिनि। सोऽपि शाक्यादिभेदभिन्न इत्याह। जिनदेशिते निर्ग्रन्थसंबन्धिनीति सूत्रार्थः ॥ ए ॥

देवलोगसमाणो अ, परिआउ महेसिणं ॥
रयाणं अरयाणं च, महानरयसारिसो ॥ १० ॥

( अवचूरिः ) एतत्स्थिरीकरणार्थमाह। देवलोकसदृश एव पर्यायः प्रव्रज्यारूपो महर्षीणां रतानां सक्तानाम्। पर्याय एवेति गम्यते। यथा देवलोके देवाः प्रेक्षणकादिव्यापृतास्तिष्ठन्ति तथा प्रत्युपेक्षणादौ साधवः। अरतानां च भावतः सामाचार्यामसक्तानां चशब्दाद्विषयेप्सूनां च जिनलिङ्गविडम्बकानां महानरकसदृशः। तत्कारणत्वात् मानसदुःखातिरेकात् ॥ १० ॥

( अर्थ. ) साधुना चित्तनी स्थिरताने अर्थे कहे ठे. देवलोग इत्यादि सूत्र. ( अ के० ) च एटले वली ( रयाणं के० ) रतानां एटले सामाचारीने विषे प्रीति राखनारा ( महेसिणं के० ) महर्षीणां एटले रूडी रीते चारित्र पालनार मुनिराजोने ( परिआए के० ) पर्यायः एटले चारित्रपर्याय जे ते ( देवलोगसमाणो के० ) देवलोक सरखो ठे. तात्पर्य ए ठे के, जेम देवलोकमां देवताउ नाटक प्रमुख जोवामां मग्न थइ निरंतर आनंदमां रहे ठे. दीनपणुं पामता नथी. तेम भला साधुउ पण

नावथी पडिलेहण प्रमुख क्रियाने विषे आसक्त रही आनंदमां कालनिर्गमन करे
माटे मुनिराजनो चारित्र पर्याय स्वर्गसुखसमान छे. तेमज ( अरयाणं के० ) श
तानां एटले सामाचारीने विषे प्रीति न राखनार एवा ( अ के० ) च एटले श
विषयने विषे आसक्त थएल एवा साधुउने चारित्र पर्याय जे ते ( महानरयसारि
के० ) महानरकसदृशः एटले रौरव प्रमुख नरकसमान दुःखदायी छे. ॥ १० ॥

( दीपिका. ) अवधानोत्प्रेक्षिणः स्थिरीकरणार्थमाह। महर्षीणां सुसाधूनां पय
संयमे रतानामासक्तानां पर्यायो देवलोकसमानः । अयमर्थः । यथा देवलोके दे
नाटकादिव्यापृताः सन्तोऽदीनमनसस्तिष्ठन्ति । तथा सुसाधवोऽपि ततोऽधिकनावतः
त्युपेक्षणादिक्रियाव्यापृता अदीनमनसस्तिष्ठन्ति । कथम् । उपादेयविशेषत्वात्
त्युपेक्षणादेः । तथा पर्यायेऽरतानां च नावतः सामाचार्यामसक्तानाम् । चशब्द
विषयानिलाषिणां च । नगवल्लिङ्गविडम्बकानां क्षुद्रप्राणिनां पर्यायो महानरक
दृशो रौरवादितुल्यः। तत्कारणत्वाद् मानसदुःखातिरेकात्, तथा विडम्बनाचेति ॥१०

( टीका. ) अवधानोत्प्रेक्षिणः स्थिरीकरणार्थमाह । देवलोग त्ति सूत्रम् । अस्य व्य
ख्या । देवलोकसमानस्तु देवलोकसदृश एव पर्यायः प्रव्रज्यारूपः । महर्षीणां सुसा
नां रतानां सक्तानाम् । पर्याय एवेति गम्यते। एतदुक्तं नवति । यथा देवलोके देव
प्रेक्षणकादिव्यापृता अदीनमनसस्तिष्ठन्त्येवं सुसाधवोऽपि ततोऽधिकं नावतः प्रत्युपेक्ष
णादिक्रियायां व्यापृता उपादेयविशेषत्वात् प्रत्युपेक्षणादेरिति । देवलोकसमान
एव पर्यायो महर्षीणां रतानामिति । अरतानां च नावतः सामाचार्यामसक्तानां च
चशब्दाद्विषयानिलाषिणां च । नगवल्लिङ्गविडम्बकानां क्षुद्रसत्त्वानां महानरकसदृशो
रौरवादितुल्यस्तत्कारणत्वान्मानसदुःखातिरेकात्, तथा विडम्बनाचेति सूत्रार्थः ॥१०॥

अमरोवमं जाणिअ सुक्खमुत्तमं, रयाण परिआई तहारयाणं ॥
निरओवमं जाणिअ डुक्खमुत्तमं, रमिज्ज तम्हा परिआइ पंमिए ॥ ११ ॥

( अवचूरिः ) तदुपसंहारेणैव निगमयन्नाह । अमरोपमसुखन्यायाद्देवसदृशं
सौख्यं ज्ञात्वा प्रशमसारं रतानां पर्यायसक्तानां तथारतानां तस्मिन्नेव निरयोपमं दुःख
म् । रमेत तस्मात्पर्याये पण्डितः शास्त्रज्ञः ॥ ११ ॥

( अर्थ. ) एज वात प्रकट कहे छे. अमरोवमं इत्यादि सूत्र. ( तम्हा के० ) त
स्मात् एटले ते कारणमाटे ( पंमिए के० ) पण्डितः एटले शास्त्रार्थना जाण एवो
पुरुष जे ते ( परिआइ के० ) पर्याये एटले चारित्र पर्यायने विषे ( रयाण के० )

रतानां एटले त्यांथी आसक्त एवा मुनिराजोने ( अमरोवमं के० ) अमरोपमं एटले देवतासरखुं ( उत्तमं के० ) उत्तमं एटले उत्कृष्टुं ( सुक्कं के० ) सुखं एटले सुखप्रत्ये ( जाणिअ के० ) ज्ञात्वा एटले जाणीने ( तहा के० ) तथा एटले तेमज ( अरयाणं के० ) अरतानां एटले सामाचारी पालवामां कंटालो करनार एवा साधुउने ( निरउवमं के० ) निरयोपमं एटले नरकसमान ( उत्तमं के० ) उत्तमं एटले आकरुं (दुक्कं के०) दुःखं एटले दुःख प्रत्ये (जाणिअ के०) ज्ञात्वा एटले जाणीने (परिआइ के० ) पर्याये एटले चारित्रपर्यायने विपे ( रमिज्ज के० ) रमेत एटले रमी रहे.॥११॥

( दीपिका. ) एतच्चोपसंहारेणैव निगमयन्नाह । पण्डितः शास्त्रज्ञः पर्याय उक्तरूपे संयमे रमेत सक्तिं कुर्यात् । किं कृत्वा । अमरोपमं देवसदृशं सौख्यं प्रशमसौख्यं प्रशस्तं ज्ञात्वा विज्ञाय । केपामित्याह । पर्याये रतानां दीक्षायां सक्तानाम् । सम्यक्प्रत्युपेक्षणादिक्रियायक्ते । पुनः किं कृत्वा । पर्याय एवारतानाम् नरकोपमं नरकतुल्यमुत्तमं प्रधानं दुःखं च ज्ञात्वा ॥ ११ ॥

( टीका. ) एतदुपसंहारेणैव निगमयन्नाह । अमर त्ति सूत्रम् । अस्य व्याख्या । अमरोपममुक्तन्यायाद्देवसदृशं ज्ञात्वा विज्ञाय सौख्यमुत्तमं प्रशमसौख्यम् । केपामित्याह । रतानां पर्याये सक्तानां सम्यक्प्रत्युपेक्षणादिक्रियायक्ते श्रामण्ये। तथा अरतानां पर्याय एव । किमित्याह । नरकोपमं नरकतुल्यं ज्ञात्वा दुःखमुत्तमं प्रधानमुक्तन्यायात् । यस्मादेवं रतारतविपाकस्तस्माद्रमेत सक्तिं कुर्यात् । केत्याह । पर्याय उक्तस्वरूपे पण्डितः शास्त्रार्थज्ञ इति सूत्रार्थः ॥ ११ ॥

धम्माउ भट्ठं सिरिउ ववेयं, जन्नग्गि विज्झाअमिवप्पतेअं ॥
हीलंति णं दुविहिअं कुसीला, दाढुद्दिअं घोरविसं व नागं ॥ १२ ॥

( अवचूरिः ) पर्यायच्युतस्यैहिकं दोपमाह । धर्माच्छ्रमणधर्माद्भ्रष्टं च्युतं श्रियोऽपेतं तपोलक्ष्म्या अपेतम् । यज्ञाग्निं विध्यातमिव यागावसानेऽल्पतेजसम् । अल्पशब्दोऽभावे । तेजःशून्यं भस्मकल्पमित्यर्थः । हीलयन्ति पतितस्त्वमिति पङ्क्त्यपसरणादिना । एनमस्तव्रतं दुर्विहितं दुष्टानुष्ठानं तत्सङ्गोचितलोका उद्धृतदंष्ट्रं रौद्रविपमिव नागं सर्पम् ॥ १२ ॥

( अर्थ. ) हवे चारित्रथी भ्रष्ट थएल पुरुपने आ लोकने विपे शुं दोप थाय ते कहे छे. धम्माउ इत्यादि सूत्र. ( कुसीला के० ) कुशीलाः एटले जे लोकोनी साथे रहेवुं पडे ते कुशीलिया एवा लोको जे ते ( धम्माउ के० ) धर्मात् एटले चारित्ररूप

ी ( भठं के० ) भ्रष्ट एटले भ्रष्ट थएल एवा, ( सिरिउ के० ) श्रियः एटले तप-
रूप लक्ष्मीथी ( ववेअं के० ) अपेतं एटले रहित एवा माटेज ( डुव्विहिअं के०)
हितं एटले डुष्ट व्यापार करनार एवा ( णं के० ) एनं एटले आ चारित्रथी
थएल पुरुषने ( विझाय के० ) विध्यातं एटले उलवाइ गएल जेवो थएल एवा
टेज ( अप्पतेअं के० ) अल्पतेजसं एटले क्षीण थयुं छे तेज जेनुं एवा ( जन्नग्गि-
व के० ) यज्ञाग्निमिव एटले यज्ञने माटे सिद्ध करेल अग्निने जेम यज्ञ थइ रह्या
ी तिरस्कार करे छे, अथवा ( घोरविसं के० ) घोरविषं एटले घणा आकरा भय-
ारि विषने धारण करनार एवो ( सप्पं के० ) सर्पं एटले सर्प ( दाढुद्दिअं के० )
ऊृतदंष्ट्रम् एटले जेनी जहेरी दाढ उखेडी नाखी छे एवो थाय त्यारे ( व के० )
म तेनो सर्व लोको तिरस्कार करे छे, तेम ( हीलंति के० ) हीलयन्ति एटले
तिरस्कार करे छे. ॥ १२ ॥

( दीपिका. ) अथ चारित्रभ्रष्टस्य इहलोकसंबन्धिदोषमाह । कुशीलास्तत्सङ्गोचि-
ता लोका एनमुन्निष्कान्तं हीलयन्ति पतितस्त्वमिति पङ्क्तितोऽपसारणादिना कद-
र्थयन्ति । किंभूतमेनं । धर्मात् साधुधर्माद् भ्रष्टं च्युतम् । पुनः किंभूतमेनम् । श्रिय
अपेतं लक्ष्म्या वर्जितम् । कमिव हीलयन्ति । यज्ञाग्निमग्निष्टोमाद्यनलम् । विध्यातमि
यागप्रान्ते । अल्पतेजसम् । अल्पशब्दस्य अभाववाचित्वात् । तेजःशून्यं भस्मसदृश
त्यर्थः । किंभूतमेनम् । डुर्विहितम् । उन्निष्क्रमणादेव डुष्टानुष्ठायिनम् । पुनः कि
हीलयन्ति । उद्धृतदंष्ट्रमुत्खातदाढं घोरविषमिव रौद्रविषमिव नागं सर्पम् ॥ १२ ॥

( टीका. ) पर्यायच्युतस्यैहिकं दोषमाह । धम्माउ त्ति सूत्रम् । अस्य व्याख्
धर्माच्छ्रमणधर्माद्भ्रष्टं च्युतं श्रियोऽपेतं तपोलक्ष्म्या अपगतं यज्ञाग्निमग्निष्टोमाद्यनलं
ध्यातमिव यागावसानेऽल्पतेजसम् । अल्पशब्दोऽभावे । तेजःशून्यं भस्मकल्पमित्य...
हीलयन्ति कदर्थयन्ति । पतितस्त्वमिति पङ्क्त्यपसारणादिना । एनमुन्निष्कान्तं डुर्वि-
हितमुन्निष्क्रमणादेव डुष्टानुष्ठायिनं कुशीलास्तत्सङ्गोचिता लोकाः।स एव विशेष्यते।
दाढुद्धिअं ति।प्राकृतशैल्या उद्धृतदंष्ट्रमुत्खातदंष्ट्रं घोरविषमिव रौद्रविषमिव नागं सर्पम्।
यज्ञाग्निसर्पोपमानं लोकनीत्या प्रधानभावादप्रधानभावाख्यापनार्थमिति सूत्रार्थः ॥१२॥

इहेवधम्मो अयसो अकित्ती, डन्नामधिज्जं च पिहुज्जणंमि ॥
चुअस्स धम्माउ अहम्मसेविणो, संभिन्नचित्तस्स य हिठउ गइ ॥ १३ ॥

( अवचूरिः ) ऐहिकदोषमुक्त्वोभयलोकदोषमाह । इहेव इहलोक एवाधर्म इत्य-

यमधर्मः। अयशोऽपराक्रमकृतं न्यूनत्वम्। अकीर्त्तिरदानपुण्यफलप्रवादरूपा। दुर्नामधेयं च पुराणः पतित इति कुत्सितं नामधेयं भवति। पृथग्जने नीचजन आस्तां शिष्टलोके। कस्येत्याह। च्युतस्य धर्मादुत्प्रव्रजितस्य अधर्मसेविनः। कलत्रादिनिमित्तं षट्कायोपमर्दकारिणः। संभिन्नवृत्तस्य खण्डितचारित्रस्य। क्लिष्टकर्मबन्धादधस्तान्नरकेषूपपातो भवति ॥ १३ ॥

---

( अर्थ. ) आ रीते चारित्रभ्रष्ट पुरुषनी आ लोकमां थती विटंबना कही. हवे आ लोकमां तथा परलोकमां जे विटंबना थाय छे ते कहे छे. इहेव इत्यादि सूत्र. ( धम्माउ के० ) धर्मात् एटले धर्मथी ( चुअस्स के० ) च्युतस्य एटले भ्रष्ट थएल एवा माटे ( अहम्मसेविणो के० ) अधर्मसेविनः एटले स्त्रीपुत्रादिकने अर्थे हिंसादिक करनार एवा ( य के० ) च एटले वली ( संभिन्नवित्तस्स के० ) संभिन्नवृत्तस्य एटले नहि खंडित करवायोग्य एवा चारित्रने खंडित करनार एवा पुरुषने ( इहेव के० ) इहैव एटले आ लोकने विषेज ( अधम्मो के० ) अधर्मः एटले अधर्म थाय छे. अर्थात् ए अधर्मी छे एम भ्रष्टचारित्री कहेवाय छे. तेमज ( अयसो के० ) अयशः एटले पराक्रमना अभावथी न्यूनपणुं आवे छे. ( अकित्ती के० ) अकीर्त्तिः एटले दानपुण्यना अभावथी न्यूनपणुं आवे छे. तेमज ( पिहुजणंमि के० ) पृथग्जने एटले प्राकृतजनने विषे अर्थात् हलका लोकोमां ( दुन्नामधिज्जं के० ) दुर्नामधेयं एटले 'फलाणो जुनो चारित्री पतित थयो' एवी रीते नाम निंदाय छे. तथा अंते ( हिट्ठओ गइ के० ) अधस्ताद्गतिः एटले नीचे नरकने विषे गति थाय छे. ॥ १३ ॥

---

( दीपिका. ) एवमस्य भ्रष्टशीलस्य सामान्यत इहलोकसंबन्धिनं दोषं कथयित्वेहलोकपरलोकसंबन्धिनं दोषमाह। धर्मात् च्युतस्य धर्मादुत्प्रव्रजितस्य एतानि भवन्ति। कानीत्याह। इह लोक एवाधर्मो भवति। अयमधर्म इति। पुनः अयशः अपराक्रमेण कृतं न्यूनत्वं भवति। तथा अकीर्तिः अदानपुण्यफलप्रवादरूपा। तथा दुर्नामधेयं च कुत्सितनामधेयं भवति। केत्याह। पृथग्जने सामान्यलोकेऽपि। आस्तां विशिष्टलोके। किंविशिष्टस्य। धर्माच्च्युतस्य। अधर्मसेविनः कलत्रादीनां निमित्तं षड्जीवनिकायस्योदपमर्दकारिणः। पुनः किं०। संभिन्नवृत्तस्य खण्डितचारित्रस्य क्लिष्टकर्मबन्धादधस्ताद्गतिर्नरकेषूपपातो भवति ॥ १३ ॥

---

( टीका. ) एवमस्य भ्रष्टशीलस्योघत ऐहिकं दोषमभिधायैहिकामुष्मिकमाह। इहेव त्ति सूत्रम्। अस्य व्याख्या। इहैवेहलोक एवाधर्म इत्ययमधर्मः फलेन दशे-

धर्मथी ( भट्ठं के० ) भ्रष्टं एटले भ्रष्ट थएल एवा, ( सिरिउ के० ) श्रियः एटले तपस्यारूप लक्ष्मीथी ( ववेअं के० ) अपेतं एटले रहित एवा माटेज ( डुविहिअं के० ) डुर्विहितं एटले डुष्ट व्यापार करनार एवा ( एणं के० ) एनं एटले आ चारित्रथी भ्रष्ट थएल पुरुषने ( विझाय के० ) विध्यातं एटले उलवाइ गएल जेवो थएल एवा माटेज ( अप्पतेअं के० ) अल्पतेजसं एटले क्षीण थयुं छे तेज जेनुं एवा ( जन्नगिमिव के० ) यज्ञाग्निमिव एटले यज्ञने माटे सिद्ध करेल अग्निने जेम यज्ञ थइ रह्या पछी तिरस्कार करे छे, अथवा ( घोरविसं के० ) घोरविषं एटले घणा आकरा भयकारि विषने धारण करनार एवो ( सप्पं के० ) सर्पं एटले सर्प ( दाढुद्धिअं के० ) उद्धृतदंष्ट्रम् एटले जेनी जहेरी दाढ उखेडी नाखी छे एवो थाय त्यारे ( व के० ) जेम तेनो सर्व लोको तिरस्कार करे छे, तेम ( हीलंति के० ) हीलयन्ति एटले तिरस्कार करे छे. ॥ १२ ॥

( दीपिका. ) अथ चारित्रभ्रष्टस्य इहलोकसंबन्धिदोषमाह । कुशीलास्तत्संसर्गोचिता लोका एनमुन्निष्क्रान्तं हीलयन्ति पतितस्त्वमिति पङ्क्तितोऽपसारणादिना कदर्थयन्ति । किंभूतमेनं । धर्मात् साधुधर्माद् भ्रष्टं च्युतम् । पुनः किंभूतमेनम् । श्रिया अपेतं लक्ष्म्या वर्जितम् । कमिव हीलयन्ति । यज्ञाग्निमग्निष्टोमाद्यनलम् । विध्यातमिव यागप्रान्ते । अल्पतेजसम् । अल्पशब्दस्य अभाववाचित्वात् । तेजःशून्यं भस्मसदृशमित्यर्थः । किंभूतमेनम् । डुर्विहितम् । उन्निष्क्रमणादेव डुष्टानुष्ठायिनम् । पुनः कमिव हीलयन्ति । उद्धृतदंष्ट्रमुत्खातदाढं घोरविषमिव रौद्रविषमिव नागं सर्पम् ॥ १२ ॥

( टीका. ) पर्यायच्युतस्यैहिकं दोषमाह । धम्माउ त्ति सूत्रम् । अस्य व्याख्या । धर्माच्छ्रमणधर्माद्भ्रष्टं च्युतं श्रियोऽपेतं तपोलक्ष्म्या अपगतं यज्ञाग्निमग्निष्टोमाद्यनलं विध्यातमिव यागावसानेऽल्पतेजसम् । अल्पशब्दोऽभावे । तेजःशून्यं भस्मकल्पमित्यर्थः । हीलयन्ति कदर्थयन्ति । पतितस्त्वमिति पङ्क्त्यपसारणादिना । एनमुन्निष्क्रान्तं डुर्विहितमुन्निष्क्रमणादेव डुष्टानुष्ठायिनं कुशीलास्तत्संसर्गोचिता लोकाः । स एव विशेष्यते । दाढुद्धिअं ति । प्राकृतशैल्या उद्धृतदंष्ट्रमुत्खातदंष्ट्रं घोरविषमिव रौद्रविषमिव नागं सर्पं । यज्ञाग्निसर्पोपमानं लोकनीत्या प्रधानभावादप्रधानभावाख्यापनार्थमिति सूत्रार्थः ॥ १२ ॥

इहेवधम्मो अयसो अकित्ती, डुन्नामधिज्जं च पिहुज्जणंमि ॥
चुअस्स धम्माउ अहम्मसेविणो, संभिन्नचित्तस्स य हिठउ गइ ॥ १३ ॥

( अवचूरिः ) ऐहिकदोषमुक्त्वोभयलोकदोषमाह । इहैव इहलोक एवाधर्म इत्य-

